॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीदर्शनशुद्धिटीका प्रारभ्यते ॥

( मूलकर्त्ता—श्रीचंद्रप्रभसूरिः ) ( टीकाकार—श्रीदेवभद्रसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

नमः श्रीवर्धमानाय । निस्सीमज्ञानचक्षुषे ॥ जितांतरारिवर्गाय । सम्यक्तत्वार्थदेशिने ॥ १ ॥ दर्शनशुद्धेर्वृत्तिं । वक्ष्ये प्रयतः समयनीत्या ॥ मंदमतिबोधवृद्ध्यै । स्मरणार्थं चात्मनः सततं ॥ २ ॥ जिनवदननलिनसदना । विबुधासुरमनुजवृंदवंद्यपदा ॥ सर्वांगसुंदरतनु—र्वाग्देवी वसतु मे हृदये ॥ ३ ॥ व्याख्यातुं विषमागमार्थनिचितं गांभीर्यमुद्रांचितं । श्रीचंद्रप्रभसूरिभिर्विरचितं ग्रंथं कुधीः कोऽस्म्यहं ॥ किंतु श्रीविमलाभिधानगणिभिः क्षुण्णोऽयमभ्याधिकं । चेतोऽस्मिन्निति मादृशामपि पद व्यासार्थमुत्कंठते ॥ ४ ॥ इहानादितादात्म्यसंबंधारूढगाढमिथ्यात्वतिमिरांतरितविवेकलोचनमविरत प्रवृत्ताविरतिविषधरीविषमविषावेगविहस्तचेतसमुत्कटकटुकषायोदग्रग्रहग्रासावेषविह्वलमप्रतिमप्रमादम-

वनवह्निः संतापसाधर्म्यात्. तस्य निर्वापकत्वेन नीरमिव नीरं, यथाहि दवदहनसंबंधविधुरितास्तरवः सजलजलदवृष्ट्या विशिष्टां संपदमासादयंति, तथा प्राणिनोऽपि रोगजरामरणादिदुःखसंततिसंतप्ता भगवद्देशनया सततानंदसुखभाजो भवंतीति गाथार्थः. ' सिवंबतरुकीरंति ' शिवमपवर्गस्तदेवाम्रतरुश्चूतद्रुमस्तत्र कीर इव कीरः शुकः, तत्रायमर्थो यथाहि शुकः सहकारतरौ निर्भरानंदः सदा रमते, तथासौ भगवानपि शिवे इति. ' कंचणगोरसरीरंति ' कांचनं स्वर्णं तद्गौरं पीतवर्णं शरीरं यस्य स तथा तं. अनेन शेषानपि शरीरातिशयान् सूचयति.

नत्वा प्रणम्य ' जिणेसरंति ' जयंति रागाद्यरातीनिति जिनाः सामान्यकेवलिनस्तेषु वक्ष्यमाणाष्टमहाप्रातिहार्याद्यैश्वर्ययोगादीश्वरो जिनेश्वरस्तं ' वीरंति ' विशेषेण विविधं वा ईरयति क्षिपत्यष्टप्रकारं कर्मेति वीरः. विदारयति यत्कर्म । तपसा च विराजते ॥ तपोवीर्येण युक्तश्च । तस्माद्वीर इति स्मृतः. इति निरुक्ताद्वा वीरोऽपश्चिमतीर्थाधिपतिस्तं ' वुब्बं तुब्बमईणं ' इत्यादि, तुच्छाल्पा गुरुतरशास्त्रबोधाद्यक्षमा मतिर्बुद्धिर्येषां ते तथा तेषामनुग्रहार्थमुपकृतये ' समत्तभव्वाणंति ' भव्या मुक्तिगमनयोग्याः प्राणिनः, तदितरेषामुपकारानर्हत्वात्, ततश्च समस्ताश्च ते भव्याश्च समस्तभव्या-

स्तेषां. समस्तग्रहणं च भव्यजंतुष्वनुग्रहंप्रत्यविशेषार्थं. यदिवा समर्थभव्यानां, तेषामेव धर्मोपदेशानुग्रहेऽधिकारित्वात्, यदाह—अथ समर्थः शास्त्रेणापर्युदस्तश्च धर्मेऽधिक्रियते, समर्थश्च ये शुद्धं धर्ममनुतिष्ठन् पित्रादिभ्यो न बिभ्यति त इह ग्राह्या. यदाह—होइ समत्थो धम्मं । कुणमाणो जो न बीहइ परेसिं ॥ माइपिइसामिगुरुमाइ—याणधम्माणभिन्नाणंति ॥ १ ॥ 'सम्मत्तस्स सरूवंति' सम्यगित्येतस्य भाव. सम्यक्त्वं वक्ष्यमाणलक्षणं, तस्य स्वरूपं याथात्म्यं, संक्षेपेण समासेन 'निसामेहत्ति' निशाम्यताकर्णयत, श्रवणं प्रत्यवहिता भवत? शिष्याभिमुखीकरणमेतत्, अनेन पराङ्मुखमपि प्रतिबोधयतो व्याख्यातुर्धर्म एवेति ख्यापितं भवति. तथा च वाचकः—

न भवति धर्मः श्रोतु । सर्वस्यैकांततो हितश्रवणात् ॥ ब्रुवतोऽनुग्रहबुद्ध्या । वक्तुस्त्वेकांततो भवति ॥ १ ॥ इह च प्रथमगाथासूत्रेणेष्टदेवतानमस्काररूपं भावमंगलमुक्तं, द्वितीयगाथया तु 'सम्मत्तस्स सरूवंति' पदेनाभिधेयं 'तुहमईणं अणुग्गहठ्ठं समत्थभव्वाणंति' अवयवेन गुरोरनंतरप्रयोजनं च साक्षादभिहितं, तथा शिष्यानंतरप्रयोजनं सम्यक्त्वस्वरूपावगमः, परंपरं तु द्वयोरपि निःश्रेयसावाप्तिरिति विज्ञेयं. संबंधस्तु सामर्थ्यगम्यः, स च शास्त्राभिधेययोर्वाच्यवाचकभावः, शास्त्रप्रयो-

जनयोस्तूपायोपेयलक्षण इति. अथ शिवाम्रतरुकीरमित्यस्मिन् सति प्राप्तभवार्णवतीरमिति कथं ना नर्थकमेकार्थत्वात्, कांचनगौरशरीरमित्येतदपि शिवपदप्राप्तस्य मूर्तेरसत्वेन दुरवगमं, दुःखदवनीर मित्येतदपि अशरीरस्य वाग्योगाभावेन दुर्घटं, जिनेश्वरमिति विशेष्यपदमपि दुरुपपादं, तत्र सर्वे षां समानत्वात्. एतेषु वा सत्सु शिवाम्रतरुकीरमिति विरुद्धमिति सर्वमसमंजसमिति. तदयुक्तमभि प्रायापरिज्ञानात्. इह हि भगवतश्छद्मस्थाद्यवस्थात्रयेऽपि ग्रंथकर्तुर्नमस्कारः कर्तुमभिमतः, ततश्च प्रा प्तभवार्णवतीरमिति तीरासन्नमपि तीरमुपचारात्, यथा गंगासमीपोऽपि देशो गंगेति, तदनेन छद्म स्थावस्थैव विवक्षिता. यतः प्रतिपन्नानुत्तरविरतिश्रुतावधिमनःपर्यवज्ञानसंपन्नः सुतीव्रतरतपःसंयमानु ष्ठानरतिस्तस्यामप्यवस्थायां संसारांभोधितटवर्त्येव वर्तते भगवान्. दुःखदवनीरं जिनेश्वरमित्याभ्यां च केवल्यवस्था सूचिता. तत्र हि निर्जितदुर्जयांतरारिवारः प्रतिहतघनघातिकर्मा धर्ममुपदिशति, प्राति हार्याद्यैश्वर्यं वा शेषजिनेभ्योऽधिकमधितिष्ठति. कांचनगौरशरीरमित्यवस्थाद्वयेऽपि तुल्यमुभयत्रापि सशरीरत्वात्. शिवाम्रतरुकीरमित्यनेन तु सिद्धावस्थेति सर्वं सुस्थं. अन्ये त्वन्यथा समादधति—प्रा प्तमुपलब्धं पूर्वमसद्ज्ञानक्रियाभ्यासाद्भवार्णवनीरं येनेत्यनेनानादिसिद्धमतव्युदासः, तथा दुःखदव

नीरमित्यनेन संहारादिकर्तृपरपरिकल्पितासपरिक्षेपः. शिवाम्रतरुक्षीरमिति प्रतिनियतसिद्धस्थानोपदर्शनेन यत्कैश्चिदुक्तं—गुणसत्वांतरज्ञाना—न्निवृत्तप्रकृतिक्रियाः ॥ मुक्ताः सर्वत्र तिष्ठंति । व्योमवत्तापवर्जिताः ॥ १ ॥ इत्यादि, तन्निरस्यति. कांचनगौरशरीरमित्यनेन त्वशरीरमुपदेष्टारं प्रत्याचष्टे, तदुक्तं कैश्चित्—अपाणिपादो ह्यमनोग्रहीता । पश्यत्यचक्षुः स शृणोत्यकर्णः ॥ स वेत्ति विश्वं न च तस्य वेत्ता । तमाहुरग्र्यं पुरुषं पुराविदः ॥ १ ॥ इति. जिनेश्वरमित्यमुना तु सरागसिद्धस्य प्रतिबंधः, यदाहुः केचन—ज्ञानिनो धर्मतीर्थस्य । कर्तारः परमं पदं ॥ गत्वागच्छंति भूयोऽपि । भवं तीर्थनिकारतः ॥ १ ॥ इति. स्तुतिलक्षणं चेदं, तत्किल स्तोतव्यस्वार्थपरार्थसंपत्ती सोपाये वक्तव्ये, तत्र शिवाम्रतरुक्षीरमित्यनेन स्वार्थसंपत्तिः, दुःखदवनीरमित्यनेन परार्थसंपत्तिः. जिनेश्वरमित्यमुना तु द्वयोरप्युपायः प्रतिपादित इत्यलं विस्तरेणेति गाथाद्वयार्थः. ॥ १ ॥ २ ॥ इदानीं संक्षेपेणेति यदुक्तं तत्रोपपत्तिमाह—

॥ मूलम् ॥—सुयसायरो अपारो । आउं थोवं जिया य दुम्मेहा ॥ तं किंपि सिक्खियव्वं । जं कज्जकरं च थोवं च ॥ ३ ॥ व्याख्या—श्रुतसागरोऽपार इत्यादिककारणसद्भावात्समस्तप्रवचना-

ध्ययनाद्यसमर्थेन तत्किमपि शिक्षणीयं यत्कार्यकारि च स्तोकं चेति गाथासमासार्थः, अक्षरार्थः पुनरेवं—श्रुतमेव सागरः समयमहोदधिर्गांभीर्यसाधर्म्यादपारोऽदृश्यपरकूलः, तथायुर्जीवितं स्तोकमल्पं दुःषमानुभावात्, जीवाः प्राणिनः पुनर्दुर्मेधसो मंदबुद्धयो दुःषमानुभावादेव. तथा च दुःषमास्वरूपं—विज्ञाण य परिहाणी । पुप्फफलाणं च जसहीणं च ॥ आउयसुयरूरूीणं । संठाणुच्चत्तधम्माणं ॥ १ ॥ ततश्च तत्किमपि शिक्षणीयमभ्यसनीयं यत्किंचित्कार्यकारि च, ऐहिकामुष्मिकार्थप्रसाधकं. तथा स्तोकमल्पं च. चकारौ विशेषणद्वयस्य तुल्यकक्षतां लक्षयतः, तदनेन विशेषावश्यकादिग्रंथेषु विस्तरतः प्रोक्तेऽपि सम्यक्त्वस्वरूपे संक्षिप्तमिदं सुतरां प्रकरणमुपादेयमिति सूचयतीति गाथार्थः. ॥ ३ ॥ इह च लब्धात्मलाभस्य वस्तुनः स्वरूपनिरूपणमुपपत्तिमदिति प्रथमं भावसम्यक्त्वलाभप्रकारमाह

॥ मूलम् ॥—मिच्छत्तमहामोहं—धयारमूढाण इह जीवाणं ॥ पुन्नेहिं कहवि जायइ । दुलहो सम्मत्तपरिणामो ॥ ४ ॥ व्याख्या—महांश्चासौ दुरुच्छेदत्वेन गुरुस्थितिकत्वेन च मोहश्च महामोहो, मिथ्यात्वं विपर्यासहेतुस्तच्चासौ महामोहश्च मिथ्यात्वमहामोहो मिथ्यात्वमोहनीयमिति हृदयं,

स एवांधकारः सद्दर्शननिरोधकत्वेन, तेन मूढा विवेकविकलास्तेषां जीवानामिति संबंधः. 'इह-त्ति ' इहास्मिन् संसारे पुण्यैः पुण्यप्रकृतिभिः पंचेंद्रियजातित्रसबादरपर्याप्तप्रभृतिभिर्हेतुभूताभिः, तद्भावे सम्यक्त्वलाभायोगात्. कथमपीत्यनेन कष्टप्राप्यत्वप्रकारमाह—तथाहि सप्तानां ज्ञानावरणादिकर्मप्रकृतीनां स्थितौ यथाप्रवृत्तिकरणेन पल्यकादिदृष्टांततः कोटाकोटेरभ्यंतरीभूतायां तल्लाभसंभवात्. यदाह—सत्तण्हं पयडीणं । अभिंतरओ य कोडाकोडीणं ॥ काऊण सागराणं । जइ लहइ चउण्हमण्णयरं ॥ १ ॥ जायते उत्पद्यते दुर्लभो दुःप्रापोऽनेन कृतग्रंथिभेदस्याप्यनंतानुबंधिनामुदयनिरोधेनैव तदवाप्तिं सूचयति. यदभिहितं—पढमिल्लुयाण उदए । नियमासंजोयणाकसायाणं ॥ सम्मदंसणलंभं । भवसिद्धियावि न लहंतित्ति ॥ १ ॥ सम्यक्त्वं चासौ परिणामश्च सम्यक्त्वपरिणामस्तत्वश्रद्धानाध्यवसायोऽनेनात्मपरिणाम एव सम्यक्त्वमित्युक्तं भवति, एतच्चोपरितनगाथायां न्यक्षेण वक्ष्यतीति गाथार्थः. ॥ ४ ॥ तदेवाह—

॥ मूलम् ॥—देवो धम्मो मग्गो । साहू तत्ताणि चेव सम्मत्तं ॥ तव्विवरीयं मिच्छत्त—दंसणं देसियं समए ॥ ५ ॥ व्याख्या—देवो धर्मो मार्गः साधवस्तत्वानि चैव, विषयविषयिणोः कथंचि-

दभेदादेतद्विषयं श्रद्धानं सम्यक्त्वं, समवति सम्यगवैपरीत्येनावगच्छति देवादितत्वमिति सम्यक्ज्ञान आत्मा, तस्य भावः सम्यक्त्वं, सम्यक्त्वमोहनीयकर्माणुदयक्षयोपशमसमुद्भात्मपरिणामरूपं. उक्तं हि—से य सम्मत्ते पसत्थसम्मत्तमोहणीयकम्माणुवेयणोवसमखयसमुत्थोवसमसंवेगाइलिंगे सुहे आयपरिणामे पण्णत्तेत्ति. चः समुच्चये, एवोऽवधारणे. तस्यैव फलं दर्शयति—' तव्विवरीयमित्यादि ' तेषु देवादिषु विषये विपरीतं, भावप्रधानत्वान्निर्देशस्य विपर्यासोऽतद्रूपेषु तद्रूपताबुद्धिः, तद्रूपेष्वतद्रूपताबुद्धिश्च, यदिवा तद्विपरीतं देवादिश्रद्धानविपरीतमर्थस्तु स एव. मिथ्यात्वदर्शनं वितथावबोधो देशितं कथितं समये सिद्धांते. ननु तत्वार्थश्रद्धानं सम्यक्त्वमित्येतदेव वाच्यं, देवसाध्वोर्जीवतत्वे, धर्ममार्गयोश्च शुभाश्रवे संवरेवांतरभावादिदमेव च ग्रंथांतरेष्वपि सम्यक्त्वस्वरूपमुपलभ्यत इति. सत्यं, तथापि देवादीनां धर्मसर्वस्वभूतत्वात तद्विपर्यासे च सर्वानुष्ठानवैफल्यात् प्रतिदिनपूज्यत्वानुष्ठेयत्वाश्रयणीयत्वोपास्यत्वलक्षणोपयोगाच्च पृथगुपादानमिति द्वारगाथासमासार्थः. ॥ ९ ॥ व्यासार्थं तु समस्तग्रंथेन स्वयमेव वक्ष्यति, तत्र यथोद्देशं निर्देश इति न्यायात्प्रथमं देवतत्वं विवृणोति—

॥ मूलम् ॥—चउतीसअइसयजुत्त । अठमहापाडिहेरकयसोहो ॥ अठदसदोसरहिउ । सो

देवो नह्रि संदेहो ॥ ६ ॥ व्याख्या—चतुर्भिरधिका त्रिंशत् चतुस्त्रिंशत्, अतिशिष्यते विशेष्यते एभिरितरशास्तृभ्यो भगवानित्यतिशया उत्कर्षास्तैर्युतः सहितः, तथाष्टमहाप्रातिहार्यकृतशोभ इति, प्रतिहारो राजदौवारिकस्तस्य कर्म प्रातिहार्यं, तच्च सततसंनिधानवर्त्तित्वं, तदिव यानि देवैर्विधीयंते तानि तथा, महांति च तानि प्रातिहार्याणि च, अष्ट च तानि महाप्रातिहार्याणि च वक्ष्यमाणानि तैः कृतशोभं, प्राप्तत्रिलोकाभ्यधिकश्रीस्तं, तथाष्टादशभिर्दोषैर्दुषणैर्वक्ष्यमाणै रहितो विप्रमुक्तो यः स एव देव आप्तो भवतीति शेषः, नास्त्यत्र संदेहोऽस्यैव दृष्टेष्टाविरुद्धाविसंवादिवचनत्वविश्वसनीयत्वलक्षणाप्तलक्षणयोगादिति गाथार्थः ॥ ६ ॥ सविभागमतिशयानेव स्तवद्वारेणाह—

॥ मूलम् ॥—चउरो जम्मप्पभिई । एक्कारस कम्मसंखए जाए ॥ नव दस य देवजणिए । चउतीसं अइसए वंदे ॥ ७ ॥ व्याख्या—पाठसिद्धा, नवरं सम्यक् क्षयः संक्षयः सर्वघात इत्यर्थः, कर्मणां संक्षयः कर्मसंक्षयः, स च घातिकर्मणामेवेति ज्ञेयं. ते चामी—तेषां च देहोद्भूतरूपगंधो । निरामयः स्वेदमलोज्झितश्च ॥ श्वासोऽब्जगंधो रुधिरामिषे तु । गोक्षीरधाराधवले श्रुते च ॥ १ ॥ आहारनीहारविधिस्त्वदृश्य—श्चत्वार एतेऽतिशयाः सहोत्थाः ॥ क्षेत्रस्थितिर्योजनमात्रकेऽपि । सुदे-

वतिर्यग्जनकोटिकोटेः ॥ २ ॥ वाणी नृतिर्यक्सुरलोकभाषा—संवादिनी योजनगामिनी च ॥ भा मंमलं चारु च मौलिपृष्ठे । विभंबिताहर्पतिमंडलश्रि ॥ ३ ॥

साग्रे च गव्यूतिशतद्वये रुजो । वैरेतयो मार्यतिवृष्ट्यवृष्टयः ॥ डुर्भिक्षमन्यस्वकचक्रतो भयं । स्यान्नैत एकादश कर्मघातजाः ॥ ४ ॥ खे धर्मचक्रं चमराः सपाद—पीठं मृगेंद्रासनमुज्ज्वलं च ॥ छत्रत्रयं रत्नमयध्वजोंह्रि—न्यासे च चामीकरपंकजानि ॥ ५ ॥ वप्रत्रयं चारुचतुर्मुखांगता । चैत्य-द्रुमोऽधोवदनाश्च कंटकाः ॥ द्रुमानतिर्दुंदुभिनाद उच्चकै—र्वातोऽनुकूलः शकुनाः प्रदक्षिणाः ॥ ॥ ६ ॥ गंधांबुवर्षं बहुवर्णपुष्प—वृष्टिः कचश्मश्रुनखप्रवृद्धिः ॥ चतुर्विधामर्त्यनिकायकोटि—र्जघन्य-भावादपि पार्श्वदेशे ॥ ७ ॥ ऋतूनामिंद्रियार्थाना—मनुकूलत्वमित्यमी ॥ एकोनविंशतिर्दिव्या—श्च-तुस्त्रिंशच्च मीलिताः ॥ ८ ॥ इति. ॥ ७ ॥ संप्रति प्रातिहार्याण्याह—

॥ मूलम् ॥—कंकेल्लिकुसुमवुट्ठी । दिव्वझूणि चामरासणाइं च ॥ भावलयभेरिछत्तं । जयंति जिणपाडिहेराइं ॥ ८ ॥ व्याख्या—जयंति शेषासमहिमानमधः कुर्वते, कानि? कंकेल्लिप्रभृतीनि जिनप्रातिहार्याणीति संबंधः. तत्र कंकेल्लिर्दिनकरकरप्रसरावारकोऽशोकवृक्षः, एतन्मानं च—बत्तीसं

धणुहाइं । वेइयरुक्खो उ वद्धमाणस्स ॥ सेसाणं तु जिणाणं । ससरीरा बारसगुणाउं ॥ १ ॥ कु सुमवृष्टिः सुरकरविमुक्ताधःस्थितवृंतजानुदघ्नपंचवर्णसुगंधिपुष्पवर्षं, दिव्यध्वनिः सुरनरतिर्यग्जंतुजात- स्वस्वभाषापरिणामरमणीयः, संख्यातीतपरिषत्प्राणियुगपदनेकसंशयापहारचतुर, क्षीरेक्षुद्राक्षाद्यधिक- तरमाधुर्यवानायोजनगामी देशनानिनादः. चामरे त्रिभुवनैश्वर्यसंसूचके शरच्चंद्रमरीचिनिचयगौरे प्रकीर्णके. आसनममेयमहिमाविर्भावकं, समुज्ज्वलपंचवर्णमणिकिरणकदंबककर्बुरितदिगंतरं सिंहास- नं. भावलयं निर्जितमार्तंडमंडलं मौलिपृष्टप्रतिष्टितं प्रभाजालं. भेरी पुरतो व्योम्नि शब्दायमानः प्रतिरवभरितभुवनोदरो दुंदुभिः. छत्रं एकदेशे समुदायोपचाराज्जगत्त्रयैकप्रभुत्वाविर्भावनचतुरं पार्व- णचंद्रमंडलनिभातपत्रत्रयं. इह कंकेल्लिरित्यत्र प्राकृतवशाद्विभक्तिलोपः, भावलयभेरीछत्रमित्यत्र स- माहारद्वंद्वः. शेषं सुगमं. समस्तासमस्तनिर्देशश्च बंधानुलोम्यादेवमन्यत्रापि यथासंभवमूह्यं, अतिश यांतर्गतत्वेऽपि चामीषां पृथगुपादानं प्रातिहार्येऽपि व्यपदेशांतरेणागमे रूढत्वादिति गाथार्थः ॥ ८ ॥ अधुना सार्धगाथया दोषानभिधाय तदपगमेन भगवंतं गाथादलेन नमस्कुरुते—

॥ मूलम् ॥—अन्नाणकोहमयमाण—लोहमायारई य अरई य ॥ निद्दासोयअलिय—वय-

...अट्ठारसवि पचोरियामच्छरभयाइं ॥ ९ ॥ पाणिवहपेमकीला—पसंगहासा य जस्स इइ दोसा ॥ अट्ठारसवि पणट्ठा । नमामि देवाहिदेवं तं ॥ १० ॥ व्याख्या—यथास्थितवस्तुग्राहि ज्ञानं, ततोऽन्यदज्ञानं संशयविपर्ययादिकं. तत्र किमयं स्थाणुः पुरुषो वेति संशयः, शुक्तिशकले रजतबुद्धिर्विपर्ययः १, क्रोधः प्रतीतः २, मदः कुलबलैश्वर्याद्युपाधिरहंकारः ३. मानो दुरभिनिवेशः ४, लोभो गार्ध्यं, परिग्रह्य गृहिस्वभावत्वादत्रैवांतर्भवति ५. माया शाठ्यं ६. रतिरिष्टशब्दादिविषयप्राप्तौ मनःप्रहृत्तिः ७, तद्विपरीता त्वरतिः ८. निद्रा स्वापः ९ शोक इष्टवस्तुविरहमुद्दश्चित्तसंतापः १०. अलीकवचनं वृतनिह्नवासद्भूतोद्भावनविपरीतख्यापणनिंदाभेदाच्चतुर्धा. तत्र वृतनिह्नवो नास्त्यात्मेत्यादि, असद्भूतोद्भावनं सर्वव्यापी श्यामाकतंदुलमात्रो वेति, विपरीतख्यापणं गामश्वं वदतः, निंदावचनं चौरस्त्वमित्यादि ११, चौर्यं परस्वापहारः १२, मत्सरः परगुणासहिष्णुता द्वेष इति यावत् १३, भयं सप्तविधं, तद्यथा—

इहलोकभयं यन्मनुष्यो मनुष्याद्बिभेति १, परलोकभयं यन्मनुष्यः सिंहादेः २, आदानभयमादीयते स्वीक्रियत इत्यादानं द्रव्यं, ततो मा ममैतच्चौरादयोऽपहरेयुरित्येवंरूपं ३, अकस्माद्भयं बा-

ह्यनिमित्तमंतरेण यदंधकारादावुत्पद्यते ४, आजीविकाभयमाजीविका वृत्तिस्ततो भयं, कथमहं दुर्भिक्षादौ वर्तिष्ये इति ५, मरणभयं प्रतीतं ६, अश्लोकभयं यद्यहमिदमकार्यमाचरिष्यामि तदा महाप्रसिद्धिर्भविष्यतीत्येवंरूपं ७—१४, तथा प्राणिवध., प्राणिनो जीवास्तेषां मनोवाक्कायैरतियातनं १५, प्रेम स्नेहो राग इति यावत् १६, क्रीडाप्रसंगो मैथुनं १७, हासो विस्मयादिषु वक्त्रविकासात्मकः १८, चः समुच्चये.

इह च यद्यपि मत्सरः क्रोधमानात्मकः, प्रेम च मायालोभरूपं. तथापि तयोः पृथगुपादानं कथंचित्सामान्यस्य विशेषेभ्योऽन्यत्वख्यापनार्थं. तथेहाज्ञानेन ज्ञानावरणदर्शनमोहनीययोरपगम. सूचितः, निद्रया तु दर्शनावरणस्य, क्रोधादिभिः कषायमोहस्य, रत्यादिभिर्नोकषायमोहस्य, प्राणिवधालीकचौर्यक्रीडाप्रसंगलोभैश्चारित्रमोहस्य, अमीषां चापगमेंतरायस्याप्यवश्यमपगमोऽवगंतव्यः, तस्य ज्ञानदर्शनावरणाभ्यामेकसमयेन सह क्षपणीयत्वात्, तदियता घातिकर्मणामभाव इति तात्पर्यं. तथा चान्यैरपीदमेवोच्यते, यथा—अंतरायदानलाभ—वीर्यभोगोपभोगकाः ॥ हासो रत्यरती भीति—र्जुगुप्सा शोक एव च ॥ १ ॥ कामो मिथ्यात्वमज्ञानं । निद्रा चाविरतिस्तथा ॥ रागो द्वेषश्च

नो दोषा—स्तेषामष्टादशाप्यमी ॥ २ ॥ इति.

इत्युल्लेखेन यस्याष्टादशापि दोषाः प्रणष्टाः प्रलयं गताः, नमामि नमस्करोमि देवाधिदेवं तं, दीव्यंति वचनगोचरातिक्रांतवैभवातिशयेन क्रीमंतीति देवा भवनपत्यादयस्तेष्वाधिक्येन परमानंदवीर्यज्ञानावाप्त्या दीव्यति द्योतते शोभते इति देवाधिदेवस्तमिति. इह च गुणोत्कर्षं दोषाभावं च प्रतिपादयन् ये प्राकृतपुरुषनिर्विशेषाः प्रबलाज्ञानतिमिरांतरिततत्वदृष्टयः कोपप्रसादविम्बितजगज्जना अनिरुद्धाश्रवद्वारा इष्टानिष्टविषयप्राप्तिनिबंधनहर्षविषादाकुलितचेतसश्चक्रचापशूलगदादिशस्त्रविहस्तहस्तनिष्कारणजगज्जन्मस्थेमविरामविहितबालकेलयः शश्वदंगनांगपरिष्वंगरंगभाजो हास्यलास्यगीतादिव्यसनावेदितनीचवृत्तयः पशुपक्षिमेषादिवाहनाध्यासीनवपुषः सन्मार्गस्खलनोपजातजगद्विश्रुतवाच्यताविशेषास्ते देवा न भवंतीत्यावेदयतीति गाथार्थः ॥ १० ॥ एवमवधारितस्वरूपो देवः पुनः किमभिधान इति जिज्ञासायां तन्नामधेयान्याह—

॥ मूलम् ॥—तस्स पुणो णामाइं । तिण्णि जहत्थाइं समयभणियाइं ॥ अरिहंतो अरहंतो । अरुहंतो भावणीयाइं ॥ ११ ॥ व्याख्या—तस्य पुनर्वर्णितस्वरूपस्य भगवतो यथार्थानि, न पुनर्म-

डपादिवन्निरन्वयानि, समयप्रणीतानि सूत्रोक्तानि त्रीणि नामानि भावनीयानि. केनोल्लेखेन? अरिहंता अर्हन्त अरुहन्निति, इतिशब्दस्याध्याहारः, इति गाथार्थः ॥ ११ ॥ अथ यथार्थत्वमेव व्याचष्टे—

॥ मूलम् ॥—अठविहंपि य कम्मं । अरिभूयं होइ सवजीवाणं ॥ तं कम्ममरिं हंता । अरिहंता तेण वुच्चंति ॥ १२ ॥ व्याख्या—अष्टविधमपि ज्ञानावरणादिभेदतोऽष्टप्रकारमप्यपिशब्दादुत्तरप्रकृत्यपेक्षया अनेकप्रकारमपि, चशब्दोऽवधारणे भिन्नक्रमः, ततश्चाष्टविधं कर्मैवारिभूतं शत्रुभूतं भवति, सर्वजीवानर्थहेतुत्वादिति भावः, तत्कर्मारिं हंतारो, यतो भंतीत्येवं साधवो हंतारस्तु निक्तते पश्चाद् द्वितीयासमासोऽरिहंतारस्तेनोच्यंत इति. ॥ १२ ॥

॥ मूलम् ॥—अरहंति वंदणणमं—सणाइं अरहंति पूयसक्कारं ॥ सिद्धिगमणं च अरहा । अरहंता तेण वुच्चंति ॥ १३ ॥ व्याख्या—अर्हंति वंदननमस्करणे, तत्र वंदनं शिरसा, नमस्करणं वाचा, तथा अर्हंति पूजासत्कारमत्र द्वंद्वैकवद्भावः, तत्र पूजा वस्त्रमाल्यादिजन्या, सत्कारोऽभ्युत्थानादिसंभ्रमः. सिध्यंति निष्ठितार्था भवंत्यस्यां प्राणिन इति सिद्धिर्लोकांतक्षेत्रलक्षणा. तथा च भगवद्भद्रबाहुस्वामिपादाः—' इह बुंदिं चइत्ताणं । तत्थ गंतूण सिज्झइ ॥ ' तद्गमनं च प्रतीति शेषोऽ-

र्हा योग्याः, प्राकृतशैल्या अर्हंतीत्यर्हाः, यद्वा अर्हंतीत्यर्हंतस्तेनोच्यंते. असकृत्क्रियोपादानं चातिशयख्यापनार्थं, दृश्यते चायं न्यायो, यथा—जयइ सुयाणं पभवो । तित्थयराणं अपच्छिमो जयइ ॥ जयइ गुरु लोगाणं । जयइ महप्पा महावीरो ॥ १ ॥ इति ॥ १३ ॥ तथा—

॥ मूलम् ॥—अच्चंतं दड्ढंमि । बीयंमि न अंकुरो जहा होइ ॥ दड्ढंमि कम्मबीए । न रुहइ भवअंकुरोवि तहा ॥ १४ ॥ व्याख्या—अत्यंतं सर्वात्मना दग्धे बीजे यथांकुरो न भवति, तथा शुक्लध्यानानलेन दग्धे कर्मबीजे न रोहति भवांकुरः. अयमभिप्रायः—दग्धकर्मबीजत्वान्न रोहंतीत्यरोहंत इति गाथार्थः ॥ १४ ॥ संप्रत्यस्यैव भगवतः सर्वथाराध्यत्वोपदेशमाह—

॥ मूलम् ॥—तं नमह तं पसंसह । तं झायह तस्स सरणमल्लियह ॥ मा किणह कणयमुल्लेण । पित्तलं इत्तियं भणिमो ॥ १५ ॥ व्याख्या—तं देवं नमत शिरसा, तं प्रशंसत वचसा, तं ध्यायत पिंडस्थरूपस्थरूपातीतरूपतया मनसा, तस्येति सुपां सुपो भवंतीति न्यायात् षष्ठ्याः स्थाने द्वितीया, ततश्च तं शृणोत्याश्रितजनस्य विघ्नव्रातमिति शरणं त्रातारं, भावसाधनो वा शरणशब्दः, तदा तु तस्येति कर्तरि षष्ठ्येव, आलीयध्वमाश्रयध्वं, तस्यैव कर्मशत्रुसंत्रस्तजगत्परित्राणैकव्यापृत-

त्वात. असकृत्तच्छब्दोपादानं तत्रैव देवत्वबुद्धिर्विधेयेत्यादरख्यापनार्थं. किमित्येवमित्याह—मा क्रीणीत. मा विनिमयध्वं, मा गृह्णीतेति यावत्, कनकमूल्येन स्वर्णपण्येन पित्तलं प्रतीनमेतावन्नणाम, अयमभिप्रायो—वस्तूनां नामवर्णादिसाम्येऽपि महदंतरमिति न तत्र भ्रांतित. कनकमूल्यतुल्यनमनप्रशंसनध्यानादिभिः पित्तलतुल्यमरागदेवानाराधयतेत्युपदेशसर्वस्वं. तथा च—अक्कसुरहीण छीरं। कक्करयणाइं पव्वयरा दोवि ॥ एरन्डकप्परुक्का। नरुणो पुण अंतरं गरुयं ॥ १ ॥ पंथसरिसा कुपंथा। कूडकणगसरिसं न य सुवण्णं ॥ धम्मसरिसो अहम्मो। कायव्वो नेव मयमोहो ॥ २ ॥ इति गाथार्थः ॥ १५ ॥ अन्यदपि तथेति भक्तिकृत्यमाह—

॥ मूलम् ॥—मेरुव्व समुत्तुंगं। हिमगिरिधवलं वसंतधवलधयं ॥ भवणं कारेयव्वं। विहिणा सिरिवीयरायस्स ॥ १६ ॥ व्याख्या—सुगमा, नवरमिदमुत्कर्षाभिधानं समृद्ध्यपेक्षं, धनरहितस्य तु यादृशं तादृशमपि भक्त्या कुर्वंत. पुण्यमेव. यदुक्तं—यस्तृणमयीमपि कुटीं। कुर्याद्दद्यात्तथैकपुष्पमपि ॥ भक्त्या परमगुरुभ्यः। पुण्योन्मानं कुतस्तस्य ॥ १ ॥ हिमगिरिधवलमिति शेषवर्णोपलक्षणं च, दृश्यते च 'सव्वरयणमएहिं' इत्यादि. धवलध्वजप्रतिपादनं तु वर्णांतरयुक्तपताकानिरा-

सार्थमिति ॥ १६ ॥ विधिनेत्युक्तमतो विधिमेवाह—

॥ मूलम् ॥—जिणभवणकरणविहि । सुद्धा भूमी दलं च कट्ठाई ॥ भयगाणतिसंधाणं । सासयवुड्ढी य जयणा य ॥ १७ ॥ व्याख्या—जिनभवनकरणविधिरयं भवतीति शेषः, तथाहि—शुद्धा निर्दोषा भूमिर्वसुधा, सा च द्रव्यतो भावतश्च, तत्र द्रव्यतः, शिष्टजनोचितप्रदेशस्थाऽशिवकांगारास्थ्यादिशल्यरहिता च. भावतस्तु सकारणाप्रीतिकरणरहिता, अत्र दोषा हि दुष्टजनोपघातात्प्रतिदिनं वृद्धेरसंभवः, साधूनां च चैत्यवंदनार्थमनागमनं, आगमने तु वेश्याखिङ्गादीनां चेष्टादर्शनवचनश्रवणादिभिश्चित्तविप्लुतेर्धर्मभ्रंशः शासननिंदा च भवति, यथैवंविधा एवैते यन्मद्यापणवेश्यापाटकद्यूतखेलकमत्स्यबंधपाटकादिषु जिनायतनानि विधापयंति.

कलहश्च तैः सह संपद्यते, ततश्चात्मनस्तेषां च दारुणः कर्मबंध इति. शिवकादियुक्तायां पुनरनिवृत्त्यर्थहान्यनर्थापत्तिकार्यासिद्ध्यनुदयादयो बहवो दोषाः पराप्रीतिकयुक्ता वाऽधर्महेतुत्वेन धर्मार्थिना दूरतस्त्याज्याः, यदाह—धम्मब्भुज्जयएणं । सव्वस्सापत्तियं न कायव्वं ॥ इय संजमोविसेओ । इत्थ य भयवं उदाहरणं ॥ १ ॥ तथा दलं चोपादानकारणं, किंभूतं? काष्ठादि दारुपाषाणेष्टकाप्र-

भूति शुद्धमिति प्रक्रमः, तच्च यद्देवतोपवनतद्भवनादेर्नानीतं, तदानयने हि जिनभवनस्यानेतुर्वा सा भविष्यते. तथा स्वयं चेष्टकापचनमृदाछेदादिभिर्यन्न कारितं, द्विपदचतुष्पदोपघातलक्षणविधिना च यन्नानीतं, तथाहि—दलमिष्टकादि तदपि च । शुद्धं तत्कारिवर्गत. क्रीतं ॥ उचितक्रयेण तस्या-दानीतं चैव विधिना तु ॥ १ ॥

तथा भृतकानां सूत्रकारप्रभृतीनां तद्वेतनापेक्षमनतिसंधानमवंचकं अपि च तत्तेषां दातव्यं. एवं हि ते हृष्टाः संतः सविशेषं कर्मसूद्यमं कुर्वंति, जिनधर्मबहुमानाच्च बोधिबीजादि प्राप्नुवंति. तथा स्वाशयस्य शोभनाध्यवसायस्य स्वकीयाध्यवसायस्य वा वृद्धिर्वर्धनं स्वाशयवृद्धिः सा च, यथा—पिभिस्सं इत्थ अहं । वंदणगनिमित्तमागए साहू ॥ कयपुन्ने भगवंते । गुणरयणनिही महासत्ते ॥१॥ तथा—पडिबुज्झिस्संति इह । दहूण जिणिंदबिंबमकलंकं ॥ अन्नेवि भवसत्ता । काहिंति तत्थ परं धम्मं ॥ २ ॥ ता एयं मे वित्तं । जमित्थमुवओगमेइ अणवायं ॥ इय चिंतापरिवडिया । सासयवुड्ढीकरा होया ॥ ३ ॥ तथा यतना च गुरुदोषत्यागेनेतरदोषाश्रयेण, सा च शुद्धदलग्रहणजलगालनादिरूपा, तस्या एव सर्वक्रियासु प्राधान्यात्, यदाह—जयणा य पयत्तेणं । कायव्वा पसत्थसव्वजोगे-

सु ॥ जयणा उ धम्मसारा । जं भणियं वीयरायेहिं ॥ १ ॥ जयणा उ धम्मजणणी । जयणा ध
म्मस्स पालणी चेव ॥ तव्वुड्ढिकरी जयणा । एगंतसुहावहा जयणा ॥ २ ॥ इति. इह भूम्यादीनि
जिनभवनविधेरंगानीत्यंगांगिनोरभेदोपचाराज्जिनभवनविधि. शुद्धा भूमिरित्यादि सामानाधिकरण्ये-
नोक्तमिति गाथार्थः ॥ १७ ॥ उक्तो जिनभवनकरणविधिः, तथैतत्केन कारयितव्यमित्याह—

॥ मूलम् ॥—अहिगारिणा इमं खलु । कारेयव्वं विवज्जए दोसो ॥ आणाभंगा उच्चिय ।
धम्मो आणाए पडिबद्धो ॥ १८ ॥ व्याख्या—अधिकारिणैव वक्ष्यमाणस्वरूपेण इदं जिनवेश्म,
खलुरेवकारार्थो योजित एव, कारयितव्यं, विपर्यये ऽनधिकारिणि कारयितरि दूष्यते, अशुभकर्मोपा-
दानेन विकृतिं नीयते ऽनेनात्मेति दोषो दूषणं, कस्मादित्याह—आज्ञाभंगादेव, आङिति स्वस्वभा-
वावस्थानात्मिकया मर्यादया अभिव्याप्त्या वा ज्ञायंते ऽर्था अनयेत्याज्ञा भगवदभिहितागमः, तस्या
भंग इव भंगो ऽन्यथाकरणात्तस्मात्, अथ कथमाज्ञाभंगस्य दोषहेतुत्वमित्याह—धर्म आज्ञया प्रति
बद्धो व्याप्तस्तदविनाभावित्वात्, ततश्च यद्यदविनाभूतं न तत्तद्विना भवति, यथाग्निना धूमः, तथा
आज्ञाऽविनाभूतश्च धर्म इति गाथार्थः ॥ १८ ॥ एतदेव सविशेषमाह—

॥ मूलम् ॥—तिब्बगराणा मूलं । नियमाधम्मस्स तीए वाघाए ॥ किं धम्मो किमहम्मो । मूढा नेयं वियारंति ॥ १९ ॥ व्याख्या—तीर्थकरः शास्ता तस्याज्ञा वर्णितस्वरूपा मूलं मूलकारणं नियमान्निश्चयतो धर्मस्य यतिश्रावकभेदभिन्नस्य, तस्या आज्ञाया व्याघाते व्यतिक्रमे किं धर्मः किमधर्म इति काकुप्रयोगादधर्म एव भवतीत्याकूतं. मूढाः प्रबलमोहोपहतविवेकदृष्टयो नेदं विचारयंति विवेचयंतीति गाथार्थः ॥ १९ ॥ पर्यवसितमेवार्थमाह—

॥ मूलम् ॥—आराहणाए तीए । पुन्नं पावं विराहणाए उ ॥ एयं धम्मरहस्सं । विन्नेयं बुद्धिमंतेहिं ॥ २० ॥ व्याख्या—आराधनया श्रद्धानानुष्ठानरूपसेवया तस्या आज्ञायाः किं? पुण्यं, विराधनया आराधनाविपरीतया पुनः पापं दुःकृतं जायत इति शेषः, आज्ञाया एव धर्मनिमित्ततां प्रति पुरस्करणायाह—एतदनंतरोक्तमाज्ञाराधनाविराधनारूपं विधिनिषेधद्वारेण धर्मरहस्यं कुशलकर्मगुह्यं विज्ञेयं ज्ञातव्यं बुद्धिमद्भिः, यतः—पारलौकिकेषु विधिष्वाज्ञात एव प्रवृत्तिनिवृत्ती भवतः, प्रत्यक्षादीनां तत्राप्रवृत्तेरनाप्तवचनस्य च व्यभिचारित्वादिति गाथार्थः ॥ २० ॥ संप्रति प्रस्तुतमधिकारिणमाह—

॥ मूलम् ॥—अहिगारित्ति गिहत्थो । सुहसयणो वित्तसंजुओ कुलजो ॥ अक्खुद्दो धिइबलिओ । मइमं तह धम्मरागी य ॥ २१ ॥ व्याख्या—अधिकारी तु योग्यः पुनर्जिनभवनविधौ गृहस्थोऽगारी, न तु साधुः, विशेषप्रतिज्ञारूढत्वात्तस्य, यदुक्तं—अकसिणपवत्तगाणं । विरयाविरयाण एस खलु जुत्तो ॥ संसारपयणुकरणो । दवथए कूवदिठंतो ॥ १ ॥ सोऽपि नाविशिष्ट इत्यत आह—शुभस्वजनोऽसंक्लिष्टबांधवः, अशुभस्वजनो हि स्वजनानां लोकधर्मविरुद्धचारित्वेन न शुभभाववृद्धिमवाप्नोति, न च प्रवचनं प्रभावयितुमलं, एतद् दयार्थमेव हि जिनभवनारंभो विवेकिनां. सोऽपि वित्तसंयुतो द्रव्यपतिः, अनिदशस्य हि तदारब्धमपि न सिध्यति, तदसिद्धौ च स खेदभाजनं भवति, पराभ्यर्थनाद्वारेण तत्साधयन्नपि जनहास्यो भवति, अहो जिनभवनकरणव्याजेनायं कुटुंबं पुष्णातीति संभावनाहेतुत्वात्. सोऽपि कुलजः प्रशस्यकुलजातोऽनिंद्यकुलजातो वा, अन्यथाविधेन हि विहितं तन्नात्यंतं लोकादेयं स्यात्. सोऽप्यक्षुद्रोऽकृपणः, कृपणो ह्यौचित्येन द्रव्यव्ययकरणाशक्तत्वान्न तत्साधनाय शासनप्रभावनाय वालं, अथवाऽक्षुद्रोऽक्रूरः, क्रूरेण हि परोपतापित्वाज्जनद्वेष्येण कृतं तदायतनं तन्मत्सरेण जनद्वेष्यं स्यात्. सोऽपि धृतिबलिकः, धृतिर्मनःसमाधानं तदेव बलं सा-

मर्थ्यं तदस्यास्तीति धृतिबली, धृतिबलहीनो हि द्रव्यव्यये पश्चात्तापान्न पुण्यभाजनं भवति. सोऽपि मतिमान् बुद्धियुक्तः, मतिविहिनो ह्यनुपायप्रवृत्तेर्न दृष्टादृष्टफलभाग्भवति. तथेति समुच्चये, सोऽपि धर्मरागी श्रुतचारित्रधर्मानुरक्तः, धर्माननुरागी हि उक्तगुणकलापोपेतोऽपि न जिनभवनविधाने प्रवर्त्तते, प्रवृत्तावपि नाभिप्रेतफलसिद्धिभागिति नासावधिकारी. चकारो गुरुपूजाकरणरत्यादिगुणसंग्राहकः, तथाहि—गुरुपूजाकरणरई । सुस्सूसाइ गुणसंगओ चेव ॥ नायाहिगयविहाणस्स । धणियमाणापहाणो य ॥१॥ इति गाथार्थः ॥२१॥ अधिकारिणा निर्मापिते जिनवेश्मनि यद्विधेयं तदाह—

॥ मूलम् ॥—निप्पाइऊण एयं । जिणभवणं सुंदरं तहिं बिंबं ॥ विहिकारियमह विहिणा । पइठविज्जा लहुं चेव ॥ २२ ॥ व्याख्या—निष्पाद्य निर्माप्यैवमुक्तनीत्या जिनभवनं, ततः सुंदरं मनोनयनानंददायि तत्र जिनभवने बिंबं मृद्दृपलपित्तलरूप्यस्वर्णरत्नादिमयीं प्रतिमां प्रक्रमाज्जिनस्यैव विधिकारितं शास्त्रनीतिविधापितं, विधिश्च यथा—जिणबिंबकारणविहि । काले संपूइऊण कत्तारं ॥ विहवुचियमूल्लप्पण—मणहस्स सुहेण भावेण ॥१॥ अस्या देशतो व्याख्या—काले तदुचितावसरे संपूज्य सन्मानयित्वा कर्तारं सूत्राधारं विभवोचितमूल्यं स्वसमृद्ध्यनुरूपवेतनं अनघ-

स्यानौचित्येन द्रव्याग्राहकत्वेन लोभादिदोषरहितस्य शुभेन भावेनोदारतया प्रवर्धमानप्रशस्ताध्यवसायेनेति. नारिसयस्साभावे । तस्सेव हियञ्जमुज्जाओ नवरं ॥ नियमेइ बिंबमुल्लं । जं उचियं कालमासज्ज ॥ १ ॥ तादृशस्येत्यनघस्य तस्यैव हितार्थमुद्यतो मा बिंबार्थकल्पितद्रव्यभक्षणतः संसारगर्ते न्यपतदसाविति नियमयति बिंबमूल्यं, यथेयता द्रव्येणेयद्बिंबं विधातव्यं भवतेति, कालमासाद्येति क्वचिदपि काले कियदपि बिंबमूल्यं स्यादिति.

अथानंतरं विधिना सूत्रोक्तनीत्या प्रतीतिस्थाप्यानुरूपतया तिष्ठत्यास्ते बिंबं, ततस्तदधिकारी प्रतिष्ठापयेल्लघु शीघ्रं, चेव इवार्थे इति वचनाच्चेवेत्यत्रावधारणे. यदुक्तं निष्पन्नस्यैवं खलु जिनबिंबोदिता प्रतिष्ठा तु दशदिवसाभ्यंतरत इति. प्रतिष्ठाविधिश्च संक्षेपत आह—निप्फन्नस्स य सम्मंतस्स । पइठावणेविही एसो ॥ सठाणे सुहजोगे । अहिवासणमुचियपूयाए ॥ १ ॥ व्याख्या—स्वस्थाने यत्र तद्भविष्यति, शुभयोगे प्रशस्तचंद्रनक्षत्रलग्नादिसंबंधे, अधिवासनं प्रतिष्ठाकल्पप्रसिद्धं, उचितपूजया विभवानुसारत इति, ततश्च—चेइवंदणथुइवुड्ढी—उस्सग्गो साहु सासणसुराए ॥ थयसरणपूयकाले । ठवणामंगलगपुव्वा उ ॥ १ ॥ व्याख्या—चैत्यवंदना विधेया स्तुतिवृद्धिः प्रवर्धमानस्तु-

तिपाठ इत्यर्थः, कायोत्सर्गः कार्यः, साधु असंमूढतया, कस्याः? शासनसुरायाः प्रवचनदेवतायाः, तत्र स्तवस्मरणं चतुर्विंशतिस्तवानुचिंतनं कार्यं, ततः पूजा जातिपुष्पादिना जिनबिंबस्य, ततः लग्ने प्रतिष्ठालग्नस्याभिमतांशे स्थापना प्रतिष्ठा मंगलकपूर्वा तु पंचनमस्कारपूर्वैवेति. उक्तं च समुद्राचार्यप्रतिष्ठाकल्पे–पज्जत्तमिमेणं चिय । मायालोजेहिं विप्पमुक्कस्स ॥ पंचनमुकारेणं । असेसपावोहमलणेणं ॥ १ ॥ सवज्ञावमंगल—पंचनमुक्कारपुव्विया किरिया ॥ कायव्वा जिणबिंबाण । सब्भावेण य पइठा ॥ २ ॥ विस्तरस्तु ग्रंथांतरादवसेय इति गाथार्थः ॥ २२ ॥ अथ जिनभवनस्यैव निर्मापणविधिविशेषकृतो भेदानाह—

॥ मूलम् ॥—अहिगारिणा विहीए । कारवियं जं न साहुनिस्साए ॥ तमनिस्सकडं अठावय्व सेसं तु निस्सकडं ॥ २३ ॥ व्याख्या—अधिकारिणा वर्णितेन विधिना वर्णितेनैव, स्त्रियानिर्देशः प्राकृतत्वात्, कारितं विधापितं यत्र साधुनिश्रया यत्याश्रयेण, यदुत विवक्षिताचार्यपदे प्रतिबद्धमिदमिति, तदनिश्राकृतं जिनभवनमिति प्रकृतं, अत्र दृष्टांतमाह—अष्टापद इव भरतचक्रवर्तिकारिताष्टापदगिरिशिखरवर्तिजिनभवनवत्, शेषं तूक्तविपर्ययविहितं निश्राकृतमिति गाथार्थः ॥ २३॥

अथ प्रस्तुतबिंबस्थापनानंतरं किं विधेयमित्याह—

॥ मूलम् ॥—कुसुमक्खयधूवेहिं । दीवयवासेहिं सुंदरफलेहिं ॥ पूया घयसलिलेहिं । अट्ठविहा तस्स कायव्वा ॥ २४ ॥ व्याख्या—इह सुंदरशब्दः फलशब्देन सह समस्तोऽपि पूजाप्रकारेषु शेषेष्वपि योज्यः. अष्टौ विधाः प्रकारा यस्यां साष्टविधा पूजा, तस्य जिनबिंबस्य कर्तव्येति संबंधः, काभिः पुनस्ताभिरित्याह—कुसुमानि जलस्थलजानि मनोहरपुष्पाणि तैर्बिंबांगोपांगेषु विचित्ररचनादि कार्यं १, अक्षता अखंडोज्ज्वलाः शालितंडुलादयस्तैर्दर्पणाद्यष्टमंगललिखनं २, धूपाः प्रचुरपरिमलोद्गारा अगुर्वादिरूपास्तदुत्क्षेपणं ३, दीपास्तमःस्तोमैकप्रतीपास्तदुद्बोधनं ४, वासाः सौरभ्यवासिताश्चंदनचूर्णादयस्तैर्विच्छुरणं ५, फलानि माधुर्यपेशलानि नारंगादीनि तढ्ढौकनं ६, घृतेत्युपलक्षणं सर्वसरससारनैवेद्योपहारः ७, सलिलानि मधुरनिर्मलानि तत्स्नपनमनमिति ८. सर्वत्र व्यक्त्यपेक्षया बहुवचनमिह च राजप्रश्नीयोपांगादिष्वधिका अपि प्रकाराः केचिदुपलभ्यंते, ते तु यथासंभवमेतेष्वेवांतर्भावयितव्या इति गाथार्थः ॥ २४ ॥ इह च केचित्कस्याश्चित्प्रतिमायाः पूजनमाहुरिति तन्मतमाह—

॥ मूलम् ॥—गुरुकारियाए केइ । अन्ने सयकारियाए तं बिंति ॥ विहिकारियाए अन्ने । पडिमाए पूयणविहाणं ॥ २५ ॥ व्याख्या—गुरवो मातृपितृपितामहादयस्तैः कारितायाः, केचिदन्ये स्वयंकारितायाः, विधिकारितायास्त्वन्ये प्रतिमायास्तत्पूर्वोन्निहितं पूजाविधानं ब्रुवंति, कर्तव्यमिति शेषः. अवस्थितपक्षस्तु गुर्वादिकृतत्वस्यानुपयोगित्वान्ममत्वाग्रहरहितेन सर्वप्रतिमा अविशेषेण पूजनीयाः, सर्वत्र तीर्थकृदाकारोपलंभेन तद्बुद्धेरुपजायमानत्वात्, अन्यथा हि स्वग्रहवशादर्हद्बिंबेष्वप्यवज्ञामाचरतो दुरंतसंसारपरिभ्रमणलक्षणो बलादंहः समाढौकते. न चैवमविधिकृतामपि पूजयतस्तदनुमतिद्वारेणाज्ञाभंगलक्षणदोषापत्तिरागमप्रामाण्यात् तथाहि—निस्सकडमनिस्सकडे । वावि चेईए सव्वहिं थुइ ॥ तिन्निवेलं व चे—इयाणि वणाउं एक्केक्किया वावि ॥ १ ॥ इति गाथार्थः. ॥२५॥
अथ पूजागतमेवोपदेशशेषमाह—

॥ मूलम् ॥—सुत्तन्नणिएण विहिणा । गिहिणा णिव्वाणमिच्छमाणेण ॥ लोगुत्तमाण पूया । निच्चं चिय होइ कायव्वा ॥ २६ ॥ व्याख्या—चियेत्येवार्थे, यथा सूत्रभणितेनैव विधिना, यतः—समइपवित्तसव्वा । आणाबज्झत्ति भवफला चेव ॥ तित्थयरुद्देसेण वि । न तउ सा तउद्देसा ॥ १ ॥

विधिश्च—काले सुइभूएणं । विसिठपुष्फाइएहिं विहिणा उ ॥ सारथुइथोत्तगरुई । जिणपूया होइ विन्नेया ॥ १ ॥ गृहिणैव न त्वनगारेण, तस्यानधिकारित्वात्, एतेनाधिकारी प्रत्यपादि, निर्वाणमेवेष्टता, यतः—' नरविबुहेसरसोक्खं ' इत्यादि, किंचार्थांतरस्यान्यथापि प्राप्यत्वात्, लोकः सामान्येन भव्यसत्वलोकः सजातीयोत्कर्ष एवोत्तमत्वोपपत्तेस्तस्य सकलकल्याणैकनिबंधनतया भव्यत्वभावेनोत्तमा अर्हतस्तेषां पूजा नित्यमेव भवति कर्तव्येति गाथार्थः ॥ २६ ॥ विधिनेत्युक्तमथ विधिमेव पुरस्कुर्वन्नाह—

॥ मूलम् ॥—आसन्नसिद्धियाणं । विहिपरिणामो उ होइ सयाकालं ॥ विहिचाउ अविहिभत्ती । अभवजियदूरभवाणं ॥ २७ ॥ व्याख्या—आसन्ना स्वल्पकालप्राप्यतया समीपवर्तिनी सिद्धिर्मुक्तिर्येषां ते तथा तेषामेव विधिः समयभाषया सर्वक्रियासु सूत्रोक्तो न्यायस्तस्य परिणामो रुचिः, तुरेवार्थो योजित एव भवति. सदाकालमिति लोकरूढ्या सर्वकालार्थे. विधित्यागोऽविधिभक्तिश्चाविधिसेवा, जीवशब्दस्यांते संबंधादभव्यदूरभव्यजीवानां भवतीत्यत्रापि योगः. तत्राभव्या मुक्तिगमनायोग्याः, दूरे अपार्धपुद्गलपरावर्तात्परतो भव्यत्वं येषां ते दूरभव्या इति गाथार्थः ॥२७॥ तथा

॥ मूलम् ॥—धन्नाणं विहिजोगो । विहिपक्खाराहगा सया धन्ना ॥ विहिबहुमाणि धन्ना । विहिपक्खअदुसगा धन्ना ॥ २८ ॥ व्याख्या—धनमर्हंतीतिधन्यास्तेषां विधियोगस्तदधिगमरूपः संबंधः, विधिपक्षाराधका विधिमार्गानुष्ठायिनः सदा धन्या एव, तेषां हि शिवसुखसाधने मुख्यवृत्त्यैव प्रवृत्तत्वात्, तथा विधिबहुमानिनोऽपि धन्याः, ते हि यद्यप्यत्यंतविषयासक्ततया ज्ञानितया वा तदनुष्ठाने न प्रवर्तंते, तथापि तदनुष्ठातॄन्प्रति बहुमानतो मार्गानुपातिन, यदाह—जच्चियगुणपडिवत्ती । सव्वन्नुमयम्मि जायइ विसुद्धा ॥ तच्चिय जायइ बीयं । बोहीए तेण णाएणं ॥ १ ॥ तथा विधिपक्षादूपका अपि धन्याः, अप्रतिषिद्धमनुमतमिति न्यायेन किंचिदक्लिष्टाध्यवसायित्वेन तेषामपि मनागाराधकत्वात, उक्तं च—विहिअपउसो जेसिं । आसन्ना तेविसुद्धिपत्तत्ति ॥ खुद्दगिराणं पुण सुद्द—देसणा सीहनायसमा ॥ १ ॥ इति गाथार्थः ॥ २८ ॥ अथ विधिपक्षमुपसंहरन् ' पूयाए उवरि वंदणं नेयं ' इति वचनमनुवर्तमानो वंदनोपदेशमाह—

॥ मूलम् ॥—इय आगमविहिपुव्वं । भत्तिब्भरुल्लसियबहलरोमंचा ॥ तं भुवणवंदणिज्जं । वंदह परमाए भत्तीए ॥ २९ ॥ व्याख्या—इति हेतोरागमविधिपूर्वं भक्तिभरोल्लसितबहलरोमांचा

आंतरप्रीत्यतिशयोद्भूतबहलपुलकास्तं तीर्थकरं प्रस्तुतबिंबं वा भुवनवंदनीयं, वंद्यत्वे हेतुरयं, वंदध्वं नमस्कुरुत भो भव्या इति शेषः. परमया भक्त्या प्रकृष्टया कायप्रतिपत्त्या, अनेन बहुमानभक्तिविरहेण वंदमानोऽपि द्रव्यवंदनत्वेन न तथाविधनिर्जराभाग्भवतीत्यावेदयतीति गाथार्थः ॥ २९ ॥ वंदनविधिमेवाह—

॥ मूलम् ॥—पंचविहाभिगमेणं । पयाहिणतिगेण पूयपुव्वं च ॥ पणिहाणमुद्दसहिया—विहिजुत्ता वंदणा होति ॥ ३० ॥ व्याख्या—पंचविधाभिगमेन प्रदक्षिणात्रिकेण, पूजार्चा पूर्वा प्रथमा यस्मिंस्तत्तथा क्रियाविशेषणमिदं, चः समुच्चये, प्रणिधानमुद्राभ्यां सहिता विधियुक्ता वंदना भवति. इह च प्रदक्षिणाशब्दसंबद्धमपि त्रिकपदं व्याख्यानात्पूजाप्रणिधानमुद्रास्वपि योज्यं, एतावता च शेषत्रिकषट्कमपि सूचितं, वक्ष्यति च ' तिन्नि निस्सीहिए ' इत्यादीति गाथार्थः ॥ ३० ॥ पंचविधाभिगममेवाह—

॥ मूलम् ॥—दव्वाण सच्चित्ताणं । विउसरणमचित्तदव्वमणुसग्गो ॥ मणएगत्तीकरणं । अंजलिबंधो य दिठिपहे ॥ ३१ ॥ तह एगसाडएणं । उत्तरसंगेण जिणहरपवेसो ॥ पंचविहोभिगमो-

ह्य । अहवावि य अन्नहा एस ॥ ३२ ॥ व्याख्या—द्रव्याणां वस्तुनां सचित्तानां पुष्पतांबूलादीनां व्युत्सर्जनं परित्यागः, एतत्पुनः पूजोपकरणं विमुच्येति ज्ञेयं, तथा अचित्तद्रव्याणां कटककेयूरादीनामनुत्सर्गोऽपरिहारः, मकारोऽत्र प्राकृतप्रभवः.

तथा एकस्मिन् वस्तुनि अवस्थिततत्परिणामात्मनाप्येकं, तस्य भावस्तत्त्वं, ततो नानावस्तुसंचारित्वेन अनेकत्वस्य सत, एकत्वस्य करणमेकत्वीकरणं मनस एकत्वीकरणमिति समास., अंत.करणावलंबताविधानमित्यर्थः. तथा अंजलिबंध. शिरसि करकुड्मलन्यासो दृष्टिपथे लोचनगोचरेऽवतीर्णे भगवतीति शेषः. चः समुच्चये. तथा एकः साटको यत्रासावेकसाटकस्तेन, अनेनानेकवस्त्रनिषेधमाह, उत्तरस्मिन्नुपरितने काये आसंगो वस्त्रविन्यासविशेषलक्षण. संबंधस्तेन जिनगृहे प्रवेशोऽर्हन्मंदिरांतर्गमनं, एतच्चार्थवशात्सप्तम्यंतं कृत्वा प्राक्तनेष्वपि चतुर्षु योजनीयं. इह च ‘ एगसाडएण उत्तरासंगेणंति ’ पदं पुरुषस्यैव, स्त्रियास्तु ‘ विणउंणयाएगायलट्ठीए ’ इति पंचममभिगमपदं दृश्यं, व्यक्तं चैतत. पंचविधोऽभि आभिमुख्येन प्रस्तावाज्जिनस्य गम्यते अनेनेत्यभिगम इति पूर्वदर्शितप्रकारेण भवतीति शेष.. अपि चेत्यभ्युच्चयेऽथवा अन्यथा विशिष्टपुरुषापेक्षया एपोऽभिगम

इति गाथाद्वयार्थः ॥ ३१ ॥ ३२ ॥ तमेवाह—

॥ मूलम् ॥—अवहट्टु रायककुहाइं । पंच वररायककुहरूवाइं॥ खग्गं छत्तोवाणह—मउडं तह चामराउ य ॥ ३३ ॥ व्याख्या—अपहृत्य मुक्त्वा राजककुदानि नृपचिह्नानि, कति? पंच. किं सामान्यनृपचिह्नानि? नेत्याह—वरराजककुदरूपाणि, तान्येवाह—खड्गं कृपाणं, छत्रोपानन्मुकुटमिति द्वंद्वैकवद्भावः, तत्र छत्रमातपत्रं, उपानहौ पादुके, मुकुटचामरे च प्रतीते. स्त्रीत्वमत्र प्राकृतवशात्, राजादेर्जिनगृहप्रवेशे इत्युत्तरक्रियापक्रमः, चकारः पूर्वाभिगमपरिग्रहार्थ इति गाथार्थः ॥ ३३ ॥ संप्रति पूर्वसूचितदशत्रिकाण्याह—

॥ मूलम् ॥—तिन्नि निसीहिय तिन्नि य । पयाहिणा तिन्नि चेव य पणामा ॥ तिविहा पूया य तहा । अवत्थतियभावणं चेव ॥ ३४ ॥ तिदिसि निरिक्खणविरई । तिविहं भूमिपमज्जणं चेव ॥ वन्नाइतियं मुद्दा—तियं च तिविहं च पणिहाणं ॥ ३५ ॥ व्याख्या—सावद्यव्यापारनिषेधेन निर्वृत्ता नैषेधिक्यस्तास्तिस्रो द्वारे मध्ये गर्भगृहे च, प्रदक्षिणा दक्षिणहस्तादारभ्य प्रगतं यासु क्रियासु ताः प्रदक्षिणाः प्रतीतास्तिस्रः, चः समुच्चये, अत्र च सूत्रे क्वचिदनुपलंभादिति प्रक्षेपंतः स्थाप-

नार्हत्प्रदक्षिणांप्रति विप्रतिपद्यंते केचन, तच्चायुक्तं, साक्षादर्हंति प्रतिपादितत्वेन तद्बिंबेष्वपि तद्बुद्धिजनकेषु युज्यमानत्वात्, यदि चागमानभिहितत्वेन न विधीयेरंस्तदा चैत्याश्रयेण पंचविधाभिगमस्याप्यनभिहितत्वात्तस्यापि न विधेयतैव स्यात्. किं च जीवाभिगमसूत्रे विजयदेववक्तव्यतायां प्रतिमाप्रदक्षिणाया अपि साक्षादभिहितत्वात्. तथाहि—

तएणं से विजए देवे चउहिं सामाणियसाहस्सीहिं जाव अन्नेहिं य वाणमंतरेहिं देवेहिं देवीहिं य सद्धिं संपरिवुडे सव्विड्ढीए सव्वजुईए जाव निग्घोसनाइयरवेणं जेणेव सिद्धाययणे तेणेव उवागच्छइ, उवागच्छित्ता सिद्धाययणं अणुप्पयाहिणी करेमाणे पुरच्छिमिल्लेणं दारेणं अणुपविसइत्ति. एतद्व्याख्या—ततो देवपरिवृतः सिद्धायतनमागच्छति त्रिःप्रदक्षिणां करोतीति. तस्मा-
दविदितसिद्धांतव्यक्तेरिदं वच इत्युपेक्षणीयमिति. तथा प्रकर्षेण अत्यतिशयेन नमनानि भूमौ मू
र्धाश्लेषलक्षणानि प्रणामास्तिस्रो विधा· प्रकारा यस्यां सा, तथा पूजार्चा वक्ष्यमाणा अवस्थात्रि
भावनमपि वक्ष्यमाणमेव, तथा तिसृश्चोर्ध्वाधस्तिर्यग्लक्षणास्ता दिशश्च तासां निरीक्षणविरतिः, जि
नबिंबसन्मुखमेवावलोकनीयमिति हृदयं. तिस्रो विधा वारा लक्षणा यस्य तत्तथा चरणयोरधोत

चेत्यर्थः, भूमिप्रमार्जनं. वर्णादित्रिकं मुद्रात्रिकं त्रिविधं च प्रणिधानं वक्ष्यमाणस्वरूपं, अन्ययानि
सर्वाणि समुच्चयार्थानीति गाथाद्वयार्थः ॥ ३५ ॥ विधिवंदनामुपसंहरंस्तत्फलमाह—

॥ मूलम् ॥—इय दहतियसंजुत्तं । वंदणयं जो जिणाण तिकालं ॥ कुणइ नरो उवउत्तो ।
सो पावइ सासयं ठाणं ॥ ३६ ॥ व्याख्या—स्पष्टा, नवरमुपयुक्तोऽवहितोवर्णितविधावेव सोपयोग-
स्यैव भाववंदनाभ्युपगमेन फलावाप्तेः, यदाह—वंदंतो सम्मं चेइयाइं । सुहझाणपगरिसं लहइ ॥
तत्तो य कम्मनासं । पणठकम्मो य निव्वाणं ॥ १ ॥ इति ॥ ३६ ॥ अथ पूजा १ अवस्था २ व-
र्णादि ३ मुद्रा ४ प्रणिधान ५ त्रिकाणि सार्धेन गाथाद्वयेन विवृणोति—

॥ मूलम् ॥—पुप्फामिसथुइभेया । तिविहा पूया अवत्थतियगं तु ॥ होइ छउमत्थकेवलि-
—सिद्धत्तं भुवणनाहस्स ॥ ३७ ॥ वण्णाइतियं तुपुणो । वत्थालंबणस्सरूवं तु ॥ मणवयणका-
यजणियं । तिविहं पणिहाणमवि होइ ॥ ३८ ॥ मुद्दातियं तु इत्थं । विन्नेयं होइ जोगमुद्दाइ ॥
व्याख्या—पुष्पामिषस्तुतिभेदात् त्रिविधा पूजा, ननु पूर्वमष्टधा बहुधा च पूजोक्ता, इयं तु त्रिधे-
ति कथं न विरोधः? उच्यते, तेषु त्रिषु भेदेष्वष्टानामवशिष्टानां च भेदानामंतर्भावो विवक्षावशा-

त्, तथाहि—

पुष्पोपादानात् स्नपनसमालभनमंडनगंधधूपवस्त्राभरणाद्यंगपूजासंग्रहः, आमिषं नैवेद्यं तच्च तंडुलफलपक्वान्नखंडशर्करेक्षुजलदीपनृत्यवाद्यस्वस्तिकरंगावलीतोरणाद्यग्रपूजोपलक्षणं, स्तुतिग्रहणादेकादिसप्तांतश्लोकाष्टकचतुर्विंशतिकाद्वात्रिंशिकापंचाशिकाष्टोत्तरशतश्लोकबहुविधगीतादिस्तवनविधिपरिग्रहाः. अवस्थात्रिकं तु भवति भुवननाथस्येति योग, किं तदित्याह—छद्मस्थश्च केवली च सिद्धश्च तेषां भावस्तत्त्वं, छद्मस्थावस्था केवल्यवस्था सिद्धावस्था चेत्यर्थः. वर्णादित्रिकं तु, पुनरित्यव्ययं, वर्णार्थावलंबनस्वरूपं, तुरेवकारार्थः, तत्र वर्णा व्याविद्धव्यत्याम्रेडितत्वादिदोषरहितान्यक्षराणि, अर्थस्तदभिधेयं, आलंबनं जिनबिंबं, एतानि स्वरूपं यस्य तत्तथा. तथा मनोवचनकायजनितं प्रणिधानमपि त्रिविधं भवति, तत्र संवेगरसानुविद्धमंत करणस्थैर्यं मन प्रणिधानं, प्रतिकुंचितादिदोषरहितस्तत्त्वोच्चारणं वचनप्रणिधानं, निभृतांगोपांगत्वं कायप्रणिधानमिति. तथा मुद्रात्रिकं पुनरिदं ह्रस्वानुस्वारस्य प्राकृतत्वादत्र चैत्यवंदनायां विज्ञेयं भवति योगमुद्रादि, योगमुद्रा सुनद्धमुक्ताशुक्तिमुद्रा लक्षणं. कुतः पुनरिदमित्याशंकायां वृद्धसम्मतमुपदर्शयितुकाम उत्तरार्धमाह—

॥ मूलम् ॥—हरिभद्दसूरिविरइय—गंथंमि इमं जं भणियं ॥ ३९ ॥ व्याख्या—सुगमा,
नवरं हरिभद्रसूरिविरचिते ग्रंथे पंचाशकाख्ये इति ॥ ३९ ॥ अथ तद्भणितमेव गाथापंचकेनाह—
॥ मूलम् ॥—पंचंगो पणिवाओ । थयपाढो होइ जोगमुद्दाए ॥ वंदणं जिणमुद्दाए । पणि-
हाणं मुत्तसुत्तीए ॥ ४० ॥ दो जाणू दोन्नि करा । पंचमगं होइ उत्तमंगं तु ॥ संमंसंपणिवाओ ।
ते पंचंगपणिवाओ ॥ ४१ ॥ अन्नोन्नंतरियंगुलि—कोसागारेहिं दोहिं हत्थेहिं ॥ पिट्टोवरि कुप्परसं-
—ठिएहिं तह जोगमुद्दत्ति ॥ ४२ ॥ चत्तारि अंगुलाइं । पुरओ ऊणाइं जत्थ पच्छिमओ ॥ पाया-
णं उस्सग्गो । एसा पुण होइ जिणमुद्दा ॥ ४३ ॥ मुत्तासुत्तीमुद्दा । समा जहिं दोवि गब्भिया
हत्था ॥ ते पुण निलाडदेसे । लग्गा अन्ने अलग्गत्ति ॥ ४४ ॥ व्याख्य—तत्र पंचांगान्येव यथा-
विवक्षितव्यापारवंति यत्र स पंचांगः प्रणिपातः, प्रणिपातदंडकपाठस्यादाववसाने च प्रणामो भवति
कर्तव्य इति शेषः. तथा स्तवपाठः भवति कर्तव्य इति शेषः. कयेत्याह—
योगमुद्रया वक्ष्यमाणलक्षणया. ननु चतुर्विंशतिस्तवादेरेव पाठो योगमुद्रया विधेयो, न तु
शक्रस्तवस्य, तं हि समाकुंचितवामजानुर्भूविन्यस्तदक्षिणजानुर्ललाटतटघटितकरकुड्मलः पठतीति जी-

वाभिगमादिष्वभिधीयत इति. सत्यं, केवलं नानंतरोक्तविशेषणव्युक्त एव तं पठतीति नियमोऽस्ति, पर्यंकासनस्थः शिरोविनिवेशितकरकोरकस्तं पठतीत्यस्यापि ज्ञाताधर्मकथादिषु दर्शनात्. तथा हरिभद्राचार्येणापि चैत्यवंदनवृत्तौ क्षितिनिहितजानुकरतलो भुवनगुरौ विनिवेशितनयनमानसः प्रणिपातदंडकं पठतीत्यस्य विध्यंतरस्याभिधानात्, ततोऽस्य पाठे विविधविधिदर्शनात्सर्वेषां च तेषां प्रमाणग्रंथोक्तत्वेन निषेद्धुमशक्यत्वाद्योगमुद्रयापि शक्रस्तवपाठो न विरुध्यते विचित्रत्वान्मुनिमतानां, न चैतानि परस्परमतिविरुद्धानि, सर्वैरपि विनयस्य दर्शितत्वादिति. तथा 'वंदणत्ति' इहानुस्वारलोपो द्रष्टव्यः, तेन वंदनं 'अरिहंतचेइयाणं' इत्यादि दंडकपाठे जिनबिंबादिस्तवनं जिनमुद्रयोपदेक्ष्यमाणलक्षणया, इयं च पादाश्रिता योगमुद्रा च हस्ताश्रितेति उभयोर्वंदने प्रयोगः. तथा प्रणिधानं शुभार्थप्रार्थनारूपं, विशिष्टचित्तैकाग्रतागर्भं 'जयवीयराय' इत्यादिपाठरूपं मुक्ताशुक्त्या निर्देक्ष्यमाणमुद्रया कर्तव्यमिति गाथार्थः ॥ ४० ॥

अथ पंचांगप्रणिपातादीनां व्याख्या—द्वे जानुनी अष्ठीवंतौ द्वौ करौ हस्तौ, पंचममेव पंचमकं भवति वर्तते उत्तमांगं तु शिर एवेत्यनेन पंचांग इति व्याख्यानं, एतैरेव पंचभिरंगैः सम्यग्भक्ति

तो भून्यासनो यः संप्रणिपातः प्रणामोऽसौ ज्ञेयो ज्ञातव्यः पंचांगप्रणिपातः पूर्वोक्तनिर्वचन इति. ॥ ४१ ॥ योगमुद्रास्वरूपमाह—अन्योऽन्येन परस्परेणांतरिता व्यवहिता अंगुल्यः करशाखा ययोस्तौ, तथा तौ च तौ कोशाकारौ च कमलकोरकाकृती उभययोजनेन अन्योन्यांतरितांगुलिकोशाकारौ, ताभ्यां द्वाभ्यां हस्ताभ्यां, किंभूताभ्यां? ' पिट्टुत्ति ' उदरस्योपरि ऊर्ध्वभागे कूर्पराभ्यां कफणिकाभ्यां संस्थितौ व्यवस्थितौ यौ तौ तथा ताभ्यां, उदरोपरि कूर्परसंस्थिताभ्यां, तथेति पंचांग प्रणिपातापेक्षया समुच्चयार्थः, योगो हस्तयोर्योजनविशेष. समाधिर्वा, तत्प्रधाना मुद्रा अंगन्यासविशेषो विघ्नविशेषव्यपोहनसमर्थो योगमुद्रा भवतीति गम्यते. इतिशब्दो योगमुद्रालक्षणसमाप्तिसंसूचक उपप्रदर्शनार्थो वा, इति एवंप्रकारा योगमुद्रेत्यर्थः ॥ ४२ ॥ अथ जिनमुद्रामाह—चत्वारीतिसंख्या, अंगुलानि प्रतीतानि तानि च स्वकीयान्येव पुरतोऽग्रतस्तथा ऊनानि किंचिदूनानि चत्वार्येवांगुलानि यत्र यस्यां मुद्रायां पश्चिमतः पश्चिमभागेऽथ पादयोश्चरणयोरुत्सर्ग. परस्परपरित्यागः संसर्गाभावोंतरमित्यर्थः, एषासौ, पुनःशब्दो योगमुद्रापेक्षया जिनमुद्राया वैलक्षण्यप्रतिपादनार्थः, भवति, जिनानामर्हतां कृतकायोत्सर्गाणां सत्का, जिना वा विघ्नजेत्री मुद्रा अंगन्यासविशेषो जि

नमुद्देति ॥ ४३ ॥ अथ मुक्ताशुक्तिमुद्रामाह—मुक्तशुक्तिरिव मुक्ताशुक्तिर्मुद्रा प्रतीता सा भवतीति वाक्यशेषः, समौ नान्योन्यांतरितांगुलितया विषमौ यस्यां मुद्रायां भवतः स्त, गर्भिताविव गर्भितावुन्नतमध्यौ, न तु नीरंध्रौ हस्तौ पाणी, इहैव लक्षणशेषमाह—तौ मुक्ताशुक्तिविधायकौ हस्तौ, पुनःशब्दो लक्षणांतरद्योतनार्थः, ललाटदेशे भाललक्षणे शरीरभागे लग्नौ संबद्धौ कार्यौ, अन्ये त्वपरे पुनराचार्या अलग्नावसंबद्धौ ललाटदेशे इत्येतदाहुरिति शेष इति. ननु प्रणिधानं मुक्ताशुक्त्येत्युक्तं, तच्च किल वंदनांते क्रियते, अतः शेषा वंदना प्रणिधानविरहितैव करणीयेति प्राप्तमित्यत्रोच्यते—यदेतद्वंदनांते प्रणिधानं तत्प्रार्थनागर्भोपयोगरूपं, यत्पुनर्वंदनायां तत्तदेकाग्रतारूपमतस्तत्सर्वत्र वंदनायां विधेयमिति गाथापंचकार्थः ॥ ४४ ॥ अथ व्याख्यातशेषत्रिकार्थस्वरूपं निरूप्य तदाचरणफलमाह—

॥ मूलम् ॥—पयडो सेसतियट्ठो । तत्तो नाऊण एयतियदसगं ॥ सम्मं समायरंतो । विहिचेइयवंदगो होइ ॥ ४५ ॥ व्याख्या—प्रकटः स्पष्टः शेषत्रिकाणां नैषेधिकीत्रिकादीनामर्थः, तत इति द्वित्वं प्राकृतत्वात्, ततः पूर्वेषां विवरणादमीषां च प्राकट्याद् ज्ञात्वाधिगम्यैतत् त्रिकदशकं सम्यग्य-

थावत्समाचरन् विदधानो विधिना सूत्रोक्तेन चैत्यानामर्हत्प्रतिमानां वंदको विधिचैत्यवंदको भवति.
तदन्यस्तु यथाकथंचिल्लोकप्रवाहतो वंदमानोऽप्यविधिचैत्यवंदक इत्यावेदितं भवतीति गाथार्थः ॥
॥ ४५ ॥ अवसितश्चैत्यवंदनाविधिः, अधुना सैव कस्य कतिवारा भवतीत्याह—
॥ मूलम् ॥—साहूण सत्तवारा । होइ अहोरत्तमज्झयारम्मि ॥ गिहिणो पुण चेइवंदण । ति-
य पंच व सत्त वा वारा ॥ ४६ ॥ व्याख्या—सुगमा. अथ कथं यतेः सप्तवाराश्चैत्यवंदनेत्याह—
॥ मूलम् ॥— पडिक्कमणे चेइयहरे । भोयणसमयम्मि तहय संवरणे ॥ पडिकमणसुयपडि-
बोहे—कालियं सत्तहा जइणो ॥ ४७ ॥ व्याख्या—प्रतिक्रमण इत्युक्तेऽपि प्रतिक्रमणांते इति द्र-
ष्टव्यं, ततश्च प्रतिक्रमणांते प्रातरावश्यकांते, चैत्यगृहे जिनमंदिरे, भोजनसमये जेमनकाले, तथा
चेति समुच्चये, संवरणे, समयशब्दस्यात्रापि संबंधाद्भोजनोर्ध्वं प्रत्याख्यानसमये विधीयमानमिति
शेषः, तथा प्रतिक्रमणं दिनांतावश्यकं, स्वपनं च शयनं, प्रतिबोधश्चोत्थानं, तेषां कालस्तत्र भवं प्र-
तिक्रमणस्वपनप्रतिबोधकालिकं, इति सप्तधा यतेश्चैत्यवंदनं भवतीति योगः. गृहिणः पुनस्त्रयः पंच
सप्त वा वारा एतद्यथानुसारतोऽवसेयाः, तथाहि—पडिकमउ गिहिणोवि हु । सत्तविहं पंचहा उ

इयरस्स ॥ होइ जहणेण पुणो । तीसुवि संझासु इय तिविहं ॥ १ ॥ इति गाथार्थः ॥ ४७ ॥ यावत्कृत्वश्चैत्यवंदना विधेयेत्यभिहितं, सा च प्रायो जिनवेश्मनि कर्तव्येति संबंधेन तद्गतमेव विधिशेषोपदेशमाह—

॥ मूलम् ॥—जिणमंदिरभूमीए । दसगं आसायणाण वज्जेह ॥ जिणदव्वभक्खणे रक्खणे य दोसे गुणे मुणह ॥ ४८ ॥ व्याख्या—जिनमंदिरभूमावर्हद्गृहमह्यां, आयं सम्यक्त्वादिलाभं शातयंतीत्याशातनास्तासां दशकं वर्जयत परिहरत? तथा जिनद्रव्यभक्षणे रक्षणे च यथासंख्यं दोषान् गुणांश्चकाराडपेक्षणे दोषान्मुणतावबुध्यध्वमिति गाथार्थः ॥ ४८ ॥ किं तदाशातनादशकमित्याह-

॥ मूलम् ॥—तंबोलपाणभोयणो—पाणहथीभोगसुयणनिट्ठुवणं ॥ मुत्तुच्चारं जूयं । वज्जे जिणमंदिरस्संतो ॥ ४९ ॥ व्याख्या—तांबूलं च प्रतीतं, पानं च जलादेः, भोजनं चान्यवहारः, उपानहौ च पादुके, स्त्रीभोगश्च मैथुनं, स्वपनं शयनं, निष्ठीवनं च खेलश्लेष्माद्युज्झनमिति समाहारः, तथा मूत्रं च दुरोदरं वर्जयेत्परिहरेत् जिनमंदिरस्यांतर्मध्ये. इह चतुरशीत्याशातनाः केचनामनंति. तथाहि—खेलं १ केलि २ कलिं ३ कला ४ कुललयं ५ तंबोल ६ मुग्गीलयं ७ । गाली ८

कंगुलिया ९ सरीरधुवणं १० केसे ११ नहे १२ लोहियं १३ ॥ भत्तोसं १४ तय १५ पित्त १६ वंत १७ दसणे १८ विस्सामणं १९ दामणं २० । दंत २१ च्छी २२ नह २३ गंम २४ नासिय २५ सिरो २६ सोय २७ छवीणं मलं २८ ॥ १ ॥ मंतं २९ मीलण ३० लिक्कयं ३१ विन्नजणं ३२ भंडार ३३ दुठासणं ३४ । गणी ३५ कप्पड ३६ दालि ३७ पप्पम ३८ वमी ३९ विस्सारणं नासणं ४० ॥ अक्कंदं ४१ विकहं ४२ सरब्रघम्मणं ४३ तेरिच्छिसंठवणं ४४ । अग्गीसेवण ४५ रंधणं ४६ परिखणं ४७ निस्सीहियाभंजणं ४८ ॥ २ ॥ छत्तो ४९ वाणह ५० सब्र ५१ चामर ५२ मणोणेगंत ५३ मभ्भंजणं ५४ । सच्चित्ताणमचाय ५५ चायमजिए ५६ दिठीइ नो अंजली ५७ ॥ साडेगुत्तरसंगभंग ५८ मजम्म ५९ मोलिं ६० सिरोसेहरं ६१ । हुड्डा ६२ जिंहुहगिडियाइरमणं ६३ जोहार ६४ भंडक्कियं ६५ ॥ ३ ॥ रेकारं ६६ धरणं ६७ रणं ६८ विवरणं वालाण ६९ पल्हच्छियं ७० । पाऊ ७१ पायपसारणं ७२ पुडपुडी ७३ पंकं ७४ रजं ७५ मेहुणं ७६ ॥ यूया ७७ जेमण ७८ जुज्झ ७९ विज्ज ८० वणिजं ८१ सिज्जं ८२ जलं ८३ मज्जणं ८४ । एमाइयमवज्जकज्जमुजुअं वज्जे जिणिंदालये ॥ ४ ॥

व्याख्या—खेलं मुखश्लेश्मोज्झनं १,

केलिमांदोलनजलादिविषयां २, कलिं मिथो वाक्कलहं ३, कलत्ति पागादिक्कलाग्रहणं ४, कुरुलयंति गंडूषं ५, तांबूलं प्रतीतं, स्वादिमाहारोपलक्षणं चैतत् ६, उज्झावयंति तांबूलनिर्यासरसोज्झनं ७, गालित्ति उच्छिष्टवचनं ८, कंगुलियत्ति मूत्रपुरीषे ९, सरीरधुवणंति केवलजलेन कंठस्नानं १०, केसित्ति प्रसाधकरणं ११, नहित्ति नखपरिकर्म १२, लोहियंति रक्ताकर्षणं १३, भत्तोसंति खादिमाहारं १४, तयत्ति पामादिषु त्वगवयवोज्झनं १५, पित्तत्ति पित्तछर्दिः १६, वंतत्ति आहारोद्गालं १७, दसणत्ति दंतपातनं १८, विश्रामणं अंगसंवाहनं १९, दामनं कुटुंबकादिना पशुसंयमनं २०, दंतत्ति दंताः २१, अच्छित्ति अक्षिणी २२, नहित्ति नखाः २३, गंडत्ति कपोलौ व्रणानि वा २४, नासियत्ति घ्राणं २५, सिरत्ति शिरः २६, सोयत्ति श्रवणे २७, छवित्ति त्वक् तासां मलत्ति मलोज्झनं २८, मंत्र अधर्म्यमालोचनं २९, मीलनं मल्लगणादिमेलापकं ३०, लेख्यकं पुस्तकादिलिखनमायव्ययादिप्रत्यवेक्षणं वा ३१, विभजनं दायादादेर्मिथः साधारणवस्तूनां ३२, भांडागारं कोशं ३३, दुयासनं मंचिकागब्दिकादि ३४, छणित्ति छगणस्थापनं, जलगालनमित्यन्ये ३५, कप्पड ३६, दालि ३७ पप्पड ३८, वडित्ति ३९ प्रतीतानि. नदिस्तारणं नाशनं भयेष्वाश्रयणं ४०, आक्रंद ४१ विकथे ४२ प्रती-

ते. सुरहघमणंति स्वोपकरणघटनं, चैत्योपकरणघटने तु न दोषः ४३, तिर्यक्संस्थापनमबद्धचतुष्प
दधारणं ४४, अग्निसेवन ४५ रंधने ४६ प्रतीते. परीक्षणं रूप्यकरत्नादेः ४७, नैषेधिकीभंजन ४८,
छत्र ४९ उपानत ५० शस्त्र ५१ चामराणि ५२ प्रतीतानि, नवरमुपानहौ चर्ममय्यौ. मणोणेगंतत्ति
चेतसोऽसमाहितत्वं ५३, अभ्यंजनं तैलाद्यैः ५४, सचित्तानां पुष्पादीनामत्यागं ५५, त्यागमजीवस्य
स्वर्णादेः ५६, दृष्टौ भगवद्दर्शनेंजलेरबंधनं ५७, एकसाटकोत्तरासंगभंगं प्रतीतं ५८, मुकुटं स्वर्णादि-
मयं ५९, मौलिं शिरसि वासोवेष्टनं ६०, शिरःशेखरं पुष्पापीडं ६१, हुड्डां प्रसिद्धां ६२, जिंडुहगि-
डियाइरमणंति कंडुकादिक्रीडा ६३, जोहारत्ति लोकस्थित्या मिथःपादपतनादि, वंदनकदानस्यैव वि-
हितत्वात् ६४, भंडक्रिया ६५, रेकारो गतार्थः ६६, धरणं चौराधमर्णादेः ६७, रणं शस्त्राशस्त्रि ६८,
विवरणं वालानां व्यक्तं, केशपरिकर्मोपलक्षणं चैतत, न जृंभाट्टहासादितः ६९, पर्यस्तिकां ख्यातां,
परिकरबंधाद्युपलक्षणमिदं ७०, पाडुकां काष्ठादिमयीं ७१, पादप्रसारणं व्यक्तं, मुखप्रसारणाद्युपलक्ष
णं चैतत, तेन जृंभाट्टहासादिसंग्रहः ७२, पुडपुडित्ति सुविदितं ७३, पंकमिति पंकलिप्तांह्रिगमनं,
अंह्रिलग्नपंकापनयनं वा ७४, रजश्चरणरेणुप्रमार्जनं, रजस्वलागमनमित्यन्ये ७५, मैथुनं प्रतीतं ७६,

यूयंति यूकामत्कुणाद्युत्सारणं ७७, जेमनमशनाहारं ७८, युद्धं मल्लादीनां ७९, विज्जत्ति वैद्यकं ८०,
वाणिज्यं प्रतीतं ८१, सिज्जंति शयनं ८२, जलं पानाहारं ८३, मज्जनं शिरःस्नानं ८४ एमाइयंति
अनन्त्यंगानां नूयस्त्वादेवंजातीयाविधयः कति संख्यायंते। उज्जुत्तंत्ति प्रयतो वर्जयेदिति सर्वत्र
योज्यं यथासंभवं, विभक्तिलोपपरिणामादिकं प्राकृतत्वादिति वृत्तचतुष्टयार्थः ॥ ४९ ॥ तथा निष्का-
रणमयत्नतश्चावग्रहे परिभोगेऽप्याशातनैव, इदमेव विवक्षुस्तावदवग्रहस्वरूपमाह—

॥ मूलम् ॥—सद्मावग्गह तिविहो । उक्कोसजहन्नमझिमो चेव ॥ उक्कोस सठिहत्थो । जहन्न
नव सेस विच्चालो ॥ ५० ॥ शास्त्युपदिशति तत्वमिति शास्ता तीर्थकृत्, तस्यावग्रह आनाव्यनूप्रदे
शस्त्रिविधस्त्रिप्रकारो नवतीति शेषः, त्रैविध्यमेवाह—उत्कृष्टो जघन्यो मध्यमश्चैवेति समुच्चये, क-
कियानित्याह—उत्कृष्टः षष्टिहस्तो, विभक्तिलोपाज्जघन्यो नवत्ति हस्तशब्दलोपान्नवहस्तः, शेषोऽन-
योर्मध्यवर्ती विच्चालोत्ति मध्यम इति गाथार्थः ॥ ५० ॥ ततश्च—

॥ मूलम् ॥—गुरुदेवग्गहनूमी । पज्जत्तउ चेव होइ परिनोगो॥ इठफलसाहगो सइ । अ
णिठफलसाहगो इयरो ॥ ५१ ॥ व्याख्या—गुरुर्धर्मोपदेशको देवश्चार्हंस्तयोरवग्रहभूमिस्तस्या यत्नत

आशातनाभीरुतया संलीनांगोपांगत्वलक्षणप्रयत्नेन, चेवेत्यवधारणे, परिभोगो वैयावृत्यपूजादिकृते निषदनोत्थानचंक्रमणादिरूप इष्टफलं निर्वृत्तिप्राप्तिलक्षणं, तस्य साधको भवतीति योगः, सश्चित्त सदा सर्वकालं यत्नत एव परिभोग इत्यनेनैतद्योज्यं. व्यतिरेकमाह—अनिष्टफलसाधको दुर्गतिजनक इतरथाऽयत्नतः. अथ देवतत्वविचारणायां को नाम गुरोरिह प्रस्तावः? सत्यं, अवग्रहसाम्यात्, तदवग्रहप्रमाणं च—आयप्पमाणमोत्तो । चउद्दिसिंहो अवग्गहो गुरुणो ॥ अणणुन्नायस्स सया । न कप्पइ तह्न पविसेउं ॥ १ ॥ इति. एवमप्याराध्यतरत्वेन देवशब्दस्य यथा प्रागुपादानं युज्यते न विवक्षया गुरूणां पूज्यतरत्वात्, न हि सद्गुरूपदेशं विना देवस्याप्यभिगम इति भाव इति गाथार्थः ॥ ५१ ॥ उक्तमेवार्थं किंचित्सविशेषमाह—

॥ मूलम् ॥—निठीवणाइअकरणं । असक्कहा अणुचियासणाई य ॥ आययणंमि अभोगो । इह य देवा उदाहरणं ॥ ५२ ॥ व्याख्या—निष्टीवनमादिर्यस्य दंतधावनवदनक्षालनशरीरमलोद्भनादेस्तन्निष्टीवदनादि, तस्य अकरणं, क? आयतने जिनवेश्मनि, तथा असत्यशोभना कथा स्त्रीभक्तादीनामसत्कथा, तथानुचितासनं तूलीगब्दिकापल्यंकाद्यासनं तस्याप्यकरणमितीहापि संबध्य-

ते. चः समुच्चये; अन्नोगोऽवस्थानादिपरिहारः, अत्र चास्मिन् पूर्वोक्तेऽर्थे देवा भवनपत्यादय उदाहरणं निदर्शनमिति गाथार्थः ॥ ५२ ॥ एतदेवाह—

॥ मूलम् ॥—देवहरयम्मि देवा । विसयविसविमोहियावि न कयावि ॥ अच्छरसाहिंपि समं । हासखिड्डाइवि कुणंति ॥ ५३ ॥ व्याख्या—देवगृहकं यस्मिन् देवाः पूर्वोक्ताः, विषीदंति धर्मघातेन नोत्सहंते एषु, विपिएवंति वाऽभिष्वजंते जंतव एष्विति विषया, यद्वा आसेवनकाले मधुरत्वेन, परिणामे चातिकटुकत्वेन विषस्योपमां यांतीति विषया शब्दादयस्त एव विषं, तेन विशेषेण नितांतलोलुपत्वलक्षणेन मोहिता अपि मूर्छिता अपि कदाचिदपि न कुर्वंतीति संबंधः, किं? हासखिड्डाद्यपि, आस्तां तत्संभोगादि, तत्र हासपूर्वं खिड्डं हासखिड्डं कौतुकादिकरणं, काभिः? अप्सरोभिरपि समं देववेश्यादिभिः सहापि. इदमत्र हृदयं—यदि तावदत्यंतविषयिणः सतताविरताश्च देवा अप्यसच्चेष्टापरिहारेण संवृतात्मानो जिनभवनादौ तिष्ठंति, तदा विरताविरतैः सुतरां तत्परिहारेण तत्र स्थातुं युज्यत इति गाथार्थः ॥ ५३ ॥ आशातनादशकं वर्जयतेति व्याख्यातं अधुना जिनद्रव्यभक्षणेत्यादि व्याचिख्यासुः श्लोकं गाथाद्वयं चाह—

॥ मूलम् ॥—भक्खेइ जो उवक्खेइ । जिणदव्वं तु सावज ॥ पन्नाहीणो भवे जो उ । लि-प्पइ पावकम्मुणा ॥ ५४ ॥ आयाणं जो भंजइ । पडिवन्नं धणं न देइ देवस्स ॥ नस्संतं समुवेक्खइ । सोवि हु परिभमइ संसारे ॥ ५५ ॥ चेइयदव्वं साहारणं च । जो दुहइ मोहियमईज ॥ धम्मं व सो न जाणइ । अहवा बद्धाउज नरए ॥ ५६ ॥ व्याख्या—भक्षयति भुनक्ति यः श्रावकः, श्रावकग्रहणं चास्य जानतो भक्षणे गरीयान् दोष इति ज्ञापनार्थं, यावता अन्योऽपि पापकर्मणा लिप्यत एव, वक्ष्यमाणतुशब्दस्य समुच्चयार्थस्येह संबंधाउपेक्षते वान्यैर्विलुप्यमानं, किमेतैः स्वजनादिभिर्मम विरोधितैरित्युदास्ते, किमित्याह—जिनस्य स्थापनार्हतो द्रव्यं पूजार्थनिर्माल्याक्षयनिधिस्वरूपं. तथा तुशब्दोऽपिशब्दार्थो भिन्नक्रमश्च. ततः प्रज्ञाहीनोऽप्यल्पेन बहुना वार्थेन कार्यसिद्धिमजानानो मंदमतितया यथाकथंचिद् उव्यव्ययकारी लेख्यकूटश्च यो भवेत्, यत्तदोर्नित्यसंबंधात् स लिप्यते पापकर्मणाऽशुभप्रकृतिरूपेण लिप्यत इत्यनेन च तज्जनितकर्मणो दृढबंधत्वमाहेति. ॥ ॥ ५४ ॥ तथा ' आयाणंति ' आयदानं, प्राकृतत्वाद्यलोपः, राजामात्यादिवितीर्णक्षेत्रगृहहट्टग्रामादि यो भनक्ति लुंपति, तथा प्रतिपन्नधनं, म्रियमाणे पित्रादौ स्वयं वा धर्मनिमित्तमेतावद्दास्यामीति

कल्पितद्रव्यं न ददाति न वितरति देवाय, चतुर्थ्यर्थे षष्ठीयं, तथा नश्यदायदानादिकमेव प्रलीयमानं तच्चिंतकजक्षणादिना केनचित्प्रकारेण, यो यत्करिष्यति स तत्फलमवाप्स्यतीति बुद्ध्या समुपेक्षते, न प्रतिजागर्ति सामर्थ्ये सतीत्यध्याहार्यं, सोऽपि, न केवलं भक्षकादय, हुरेवकारार्थः, परिभ्रमत्येव संसरत्येव संसारे चतुर्गतिके, अप्रतिषिद्धमनुमतमिति न्यायतस्तस्याप्यनुमतिप्रसंगादिति. ॥ ॥ ५५ ॥ तथा चैत्यद्रव्यं प्रतीतं, साधारणं च जीर्णचैत्योद्धारादिनिमित्तमेकत्रमीलितं सप्तक्षेत्रोपयोगि वा, यः पापकर्मा द्रुह्यति भक्षयति, वाशब्दोऽप्यर्थे, धर्ममपि सर्वज्ञप्रणीतं स न जानाति, न खलु तीर्थप्रवृत्त्यादिहेतुचैत्यादिद्रव्यरक्षाप्रतिपादकं तद्भक्षकाणां दुर्विपाकाभिधायकं च जिनवचनं विदंत एवं प्रवर्तंते. ननु विदितवचना अप्येवं प्रवर्तमाना दृश्यंत एवेत्याह—अथवा भक्षणकालात् प्राग्बद्धायुष्को नरके, स हि जानन्नपि फलमकृत्यान्न विरमतीति रूपकत्रयार्थः ॥ ५६ ॥ आस्तां श्रावकः, साधुनापि तद्विनाशे नोपेक्षा विधेया, यतः—

॥ मूलम् ॥—चेइयदव्वविणासे । तद्दव्वविणासणे दुविहभेए ॥ साहू उविक्खमाणो । अणंतसंसारिओ भणिओ ॥ ५७ ॥ व्याख्या—चैत्यं पंचधा, साधर्मिकचैत्यं यथा साध्वादीनां, मंगलचैत्यं

गृहद्वारदेशादिनिकुट्टितप्रतिमारूपं, शाश्वतं नंदीश्वरादिव्यवस्थितं, भक्तिचैत्यं भक्त्या कृतं जिनायतनं, तच्च साधुनिश्रया कृतं निश्राकृतं, तदनिश्रया कृतं त्वनिश्राकृतं. इह तु सामान्येन जिनायतनं गृह्यते, तस्य द्रव्यं हिरण्यसुवर्णादिरूपं, तस्य विनाशे जायमाने, तथा तद्द्रव्यविनाशने तस्य चैत्यस्य द्रव्यमुपकारकं दारूपलेष्टकादिवस्तु तस्य विनाशने संपद्यमाने, द्विविधभेदे नूतनलग्नोत्पाटितविनाशरूपद्विप्रकारभेदे. मूलोत्तरभेदाद्वा, तत्र मूलं स्तंभकुंभादि, उत्तरं तु छादनादि, स्वपरपक्षजनितविनाशद्वैविध्याद्वा द्विविधभेदे, यदाह—जुग्गं अईयभावं । मूलुत्तरभावउ अहव कट्ठं ॥ जाणाहि दुविहभेयं । सपक्खपरपक्खमाई वा ॥१॥ स्वपक्षः श्रावकादिः, परपक्षो मिथ्यात्व्यादि. साधुर्यतिरुपेक्षमाणश्चैत्यद्रव्यादिविनाशमेवानंतसंसारिको भणितस्तीर्थकृद्गणधरैरिति. अथ त्रिधाप्रत्याख्यातसावद्यस्य यतेश्चैत्यद्रव्यादिचिंतायां को नामाधिकार इति चेदुच्यते—यदि राजामात्याद्यर्थनपुरस्सरं गृहहट्टग्रामादिकायदानादिविधिनानवतरमुत्पादयति तदा भवति भवद्विवक्षितार्थसिद्धिः, यदा तु केनचिद्यथाभद्रकादिना धर्माद्यर्थं प्राग्वितीर्णमन्यद्वा जिनद्रव्यं विलुप्यमानं रक्षति तदा नाभ्युपेतार्थहानिरपि तु पुष्टिरेव, सम्यग्जिनाज्ञाराधनात्, यथाहि जिनभवनं नवमकारयतोऽपि पूर्वकृतं

तु तत्प्रतिपंथिनिग्रहेणापि रक्षतो न प्रायश्चित्तं, नापि प्रतिज्ञाभंग इति. आगमोऽप्येवमेव व्यवस्थि-
तः, यदाह—

चोएइ चेइयाणं । खेत्तहिरण्णाय गामगावाणं ॥ लग्गंतस्सउ जइणो । तिगरणसोही कहं तु
भवे ॥ १ ॥ भणइ इह विभासा । जो एयाइं सयं विमग्गेज्जा ॥ तस्स न होई सोही । अह
कोइ हरेज्ज एयाइं ॥ २ ॥ तत्थ करंतुवेहं । सा जा भणियाउ तिगरणविसोही ॥ सा य न होइ
अभत्तीय । तस्स तम्हा निवारेज्जा ॥ ३ ॥ सव्वत्थामेण तहिं । संघेणय होइ लग्गिवं तु ॥ सच-
रित्तअचरित्तीण य । सव्वेसिं होइ कज्जं तु ॥ ४ ॥ इति गाथार्थः ॥ ५७ ॥ इह च प्रेक्षावत्प्रवृत्तेः
फलेप्साव्याप्तत्वात् जिनद्रव्यप्रभावातिरेकेण पुरस्सरं भक्षणरक्षणवर्द्धनफलोपदर्शनाय गाथात्रयमाह—

॥ मूलम् ॥—जिणपवयणवुड्ढिकरं । पभावगं नाणदंसणगुणाणं ॥ भक्खंतो जिणदव्वं । अ-
णंतसंसारिओ होइ ॥ ५८ ॥ जिणपवयणवुड्ढिकरं । पभावगं नाणदंसणगुणाणं ॥ रक्खंतो जिण-
दव्वं । परित्तसंसारिओ होइ ॥ ५९ ॥ जिणपवयणवुड्ढिकरं । पभावगं नाणदंसणगुणाणं ॥ वड्ढंतो
जिणदव्वं । तित्थयरत्तं लहइ जीवो ॥ ६० ॥ व्याख्या—जिनप्रवचनमार्हतशासनं, तस्य वृद्धिकरं

तत्संतानाव्यवच्छित्तिहेतुतया, तथा प्रज्ञावकं दीपकं ज्ञानदर्शनगुणानामुपलक्षणत्वाच्चारित्रगुणानां च, न खलु जिनप्रवचनवृद्धिर्जिनवेश्मविरहेण ज्ञवति, न च तद् द्रव्यव्यतिरेकेण प्रतिदिनं प्रतिजागरयितुं, जीर्णं विशीर्णं वा पुनरुद्धर्तुं पार्यते, तथा तेन पूजामहोत्सवादिषु श्रावकैः क्रियमाणेषु ज्ञानदर्शनचारित्रगुणाश्च दीप्यंते. यस्मादज्ञानिनोऽप्यहो तत्वानुगामिनी बुद्धिरेतेषामित्युपबृंहयंतः क्रमेण ज्ञानदर्शनचारित्रगुणलाभज्ञाजो ज्ञवंतीति गर्जार्थः. ततश्चैवंविधं जिनद्रव्यं ज्ञक्षयन्ननंतसंसारिको ज्ञवति, तीर्थोच्छेदकत्वेन ज्ञानादिसकलगुणघातकत्वादिति. शेषं सुगमं, नवरं ' परित्तसंसारि ज्ञत्ति ' परिसमंतादितः खंडितो जिनद्रव्यरक्षणपरत्वेनोपगृहीतप्रवचनत्वादाराधितज्ञानादिगुणत्वाच्च, स चासौ संसारश्च, स विद्यते यस्य स परित्तसंसारिकः. तथा ' वद्धंतुत्ति ' उचितांसप्रक्षेपादिना कलांतरप्रयोगादिना वा वृद्धिमुपनयन् तीर्थकरत्वं लज्ञते जीवः, अर्हद्वात्सल्याद्युक्तन्यायेन प्रवचनप्रभावकत्वाच्च, यदाह —चेइयकुलगणसंघे । उवयारं कुणइ जो अणासंसी ॥ पत्तेयबुद्धगणहर । तित्थयरो वा तओ होइ ॥ १ ॥ जिनप्रवचनेत्याद्यालापकस्य वासकृद्भणनं गमिकसूत्रत्वादिति गाथार्थः ॥ ६० ॥ इति श्रीदेवभद्राचार्यविरचिते दर्शनशुद्धिप्रकरणविवरणे प्रथमं देवतत्वं समाप्तं ॥ श्रीरस्तु ॥

व्याख्यातं लेशतो देवतत्वं, इदानीं मूलद्वारगाथाक्रमप्राप्तं धर्मतत्वं विव्रियते, संबंधश्चास्य प्रा-
च्येन प्राग्देवस्वरूपं न्यक्षेण विवक्के, स चासौ देवः स्वयमधिगताशेषसमीहितव्योऽपि जंतूनां हि
ताय यथा यथावस्थितं धर्ममुपदिदेश तथोच्यते. तत्रादौ गाथा—

॥ मूलम् ॥—जीवदयसच्चवयणं । परधणपरिवज्जणं सुसीलं च ॥ खंतीपंचेंदियनिग्ग—हो
य धम्मस्स मूलाइं ॥ १ ॥ व्याख्या—जीवितवंतो जीवंति जीविष्यंति च जीवाः, चेतनादिलिंगव्यं-
ग्याः पृथिव्यादयः प्राणिन. तेपु दया कारुण्यं, सत्यवचनं भूतहिता वाक्, परे आत्मव्यतिरिक्तास्ते-
षां धनं हिरण्यादि तस्य परिवर्जनं परिहारः, सुष्टु शोभनं शीलं, च. समुच्चये, क्षांतिः क्रोधनिग्रहः,
उपलक्षणं चेदं शेषकषायनिग्रहस्य, पंचेति पंचसंख्यानींद्रियाणि स्पर्शनरसनघ्राणचक्षु.श्रोत्रलक्ष-
णानि करणानि, तेषां निग्रहो निरोध, स्वविषयवृत्तावपि रागद्वेषाकरणं, यदुक्तं—न शक्यं रूपम
द्रष्टुं । चक्षुर्गोचरमागतं ॥ रागद्वेषौ तु यौ तत्र । तौ बुध. परिवर्जयेत ॥१॥ इति. इह पंचेंद्रियनि-
ग्रहस्य मनोनिग्रहपूर्वकत्वात्तन्निग्रहोऽपि वेदितव्य. च. समुच्चये, धारयति दुर्गतौ निपततो जीवानि-
ति धर्मः, तथा च वाचकः—

प्राग्लोकबिंदुसारे । सर्वाक्षरसंनिपातपरिपठितः ॥ धृञ्धरणार्थो धातु—स्तदर्थयोगाद्भवति धर्मः ॥ १ ॥ दुर्गतिजयप्रपाते । पतंतमजयकरदुर्लभत्राणे ॥ सम्यक् चरितो यस्मात् । धारयति ततः स्मृतो धर्म. ॥ २ ॥ तस्य मूलानीव मूलानि तत्प्रतिष्ठत्वात् धर्ममहामहीरुहस्य, संमतश्चायमर्थः सर्वास्तिकवदिनां. तथा चहु.—अहिंसा सत्यमस्तेयं । त्यागो मैथुनवर्जनं ॥ पंचैतानि पवित्राणि । सर्वेषां धर्मचारिणां ॥ १ ॥ तथा—कषाया यस्य नोछिन्ना । यस्य नात्मवशं मन. ॥ इंद्रियाणि न गुप्तानि । दर्शनं तस्य जीविका ॥ १ ॥ एवं सर्वसंमतं धर्ममुपदर्श्य स्वसमयप्रसिद्धविधिना गृहियतिभेदतस्तमभिधित्सुरन्यस्तगृहिधर्म प्रायेण यतिधर्मयोग्यो भवतीति न्यायाद्गुणस्थानकक्रममाश्रित्य वा तावद्गृहिधर्ममाह—

॥ मूलम् ॥—सम्मत्तमूलमणुव्वय—पणगं तिन्नि उ गुणव्वया हुंति ॥ सिक्खावयाइं चउरो । बारसहा होइ गिहिधम्मो ॥ २ ॥ व्याख्या—सम्यक्त्वं प्राग्वर्णितस्वरूपं तन्मूलमादिर्यस्य तत्तथा, अनेन सम्यक्त्वलाभव्यतिरेकेण व्रताभावं दर्शयति. यदाह—सम्मत्तंमि उ लद्धे । पलियपुहुत्तेण सावउ होइ ॥ चरणोवसमखयाणं । सागरसंखंतरा हुंति ॥ १ ॥ चारित्रोपशमश्रेणिक्षपकश्रेणीनां

संख्यातसागरोपमाण्यंतरं भवति. अणूनि लघूनि महाव्रतापेक्षया व्रतानि, अणोर्वा यत्यपेक्षया गृहस्थस्य व्रतानि, यदिवा अनु पश्चान्महाव्रतप्रतिपत्त्यसमर्थस्य कथनीयानि. 'जइ धम्ममसमत्थे । जुज्जइ तद्देसणंपि साहूणं ॥' इति वचनात्. अणुव्रतान्यनुव्रतानि वा तेषां पंचकमनुव्रतपंचकमेव. उत्तरपदस्थतुशब्दस्यैवकारार्थस्येह संबंधात्तेन नामूनि मध्यमतीर्थेष्वपि महाव्रतानीव चत्वारि, यतः शैलकज्ञाते शैलकराजो नेमिनाथशिष्यस्यांतिके पंचाणुव्रतिकं श्रमणोपासकधर्मं प्रतिपन्न इत्यभिहितमिति.

त्रीणि त्रिसंख्यानि गुणायानुव्रतानामुपकाराय व्रतानि नियमा गुणव्रतानि, पुंस्त्वं तु प्राकृते लिंगमतंत्रमिति वचनात्, भवंति क्रियापदं चैतद्वचनव्यत्ययेन पूर्वत्रोत्तरत्र संबध्यते. शिक्षा अभ्यासस्तत्प्रधानानि व्रतानि शिक्षाव्रतानि, पुनः पुनरासेवार्हाणीत्यर्थः. चत्वारि चतुःसंख्यानि, इतिशब्दस्य लुप्तस्येह दर्शनादित्युपनीत्या द्वादशधा भवति, गृहं स्वामित्वेन विद्यते यस्य स गृही श्रावकस्तस्य धर्म इति गाथार्थः ॥ २ ॥ द्वादशभेदः श्रावकधर्मो भवतीत्यभिहितमथ तानेव नामग्राहमाह–

॥ मूलम् ॥—पाणिवहमुसावाए । अदत्तमेहुणपरिग्गहे चेव ॥ दिसिभोगदंडसमइय । देसे

तह पोसहविभागे ॥ ३ ॥ व्याख्या—प्राणिनो जीवास्तेषां वधो हिंसा प्राणवियोजनमित्यर्थः, मृषावादोऽसत्यभाषणं, अदत्तमदत्तादानमवितीर्णग्रहणं, एवमुत्तरत्रापि यथासंभवं दृश्यं, मैथुनमब्रह्मसेवनं, परिग्रहो गार्ध्यं, इह च सूचनात्सूत्रमिति सर्वत्र विरमणशब्दो दृश्यः, चैवेति समुच्चये, दिसित्ति दिक्परिमाणव्रतं, भोगत्ति भोगोपभोगपरिमाणकरणं, दंडत्ति अनर्थदंडविरतिः, समइयत्ति सूचनात्सामायिकं, देसेत्ति देशावकाशिकं, तथा तेन व्रतस्वरूपलक्षणप्रकारेण, पौषधं पोषधव्रतं, विभत्तिलोप एकारश्च यथासंभवं सर्वत्र प्राकृतत्वादित्यक्षरगमनिका, विभागश्चैवं, तद्यथा—

उपासकः स्थूलनिरपराधजीवानभिसंधाय द्विविधत्रिविधादिना भंगजालेन न हंतीति प्रथमाणुव्रतं, तत्र स्थूला द्वित्रिचतुःपंचेंद्रियास्तद्ग्रहणात्पृथिव्यादयो निरपराधग्रहणात्सापराधाश्चौरादयः, अभिसंधायेति भणनादारंभसंभववधाश्च, न व्रतविषयाः, भंगजालं च द्विविधत्रिविधेनेत्येको भंगः, द्विविधं कृतकारितभेदं वधं, त्रिविधेन मनसा वाचा कायेन च, एवं च भावनावधं न करोत्यात्मना न कारयत्यन्यैर्मनसा वचसा कायेन चेति. अनुमतेस्तु सर्वत्र न प्रतिषेधोऽपत्यादिपरिग्रहसद्भावात्, तैर्हिंसादिकरणे च तस्यानुमतिप्राप्तेः १. द्विविधं द्विविधेनेति द्वितीयः, द्विविधमिति प्राग्वत द्विविधेन

मनसा, यद्वा मनसा कायेन, यदिवा वाचा कायेनेति २, ।द्विविधमेकविधेनेति तृतीय:, द्विविधं त्रा-
वितवत्, एकविधेन मनसा यद्वा वाचा यदिवा कायेन ३, एकविधं त्रिविधेनेति चतुर्थः, एकविधं
करणं यद्वा कारणं त्रिविधेनेति पूर्ववत् ४, एकविधं द्विविधेनेति पंचमः ५, एकविधमेकविधेनेति
षष्ठः ६, यदाह—

डुविहतिविहेण पढमो । डुविहं डुविहेण बीयऊ होइ ॥ डुविहं एगविहेणं । एगविहं चेव ति-
विहेणं ॥ १ ॥ एगविहं डुविहेणं एगेगविहेण छठ्ठ होइ ॥ एते च भंगाः करणत्रिकेण योग-
त्रिकेण च विशेष्यमाणा एकोनपंचाशद्भवंति. तथाहि—हिंसां न करोति मनसा १ वाचा २ काये-
न ३ मनसा वाचा ४ मनसा कायेन ५ वाचा कायेन ६ मनसा वाचा कायेन च ७, एते करण-
कारणाभ्यां सप्त, एवं करणानुमतिभ्यां, करणकारणानुमतिभिश्च सप्त सप्त, एवं सर्वे मीलिता एकोन-
पंचाशद्भवंतीति. यदाह—सेयालं भंगसयं । पच्चक्खाणम्मि जस्स उवलद्धं ॥ सो खलु पच्चक्खाणे ।
कुसलो सेसा अकुसलाऊ ॥ १ ॥ एते अहिंसाव्रतमाश्रित्योक्ता व्रतांतरेष्वपि द्रष्टव्या इति. १. क-
न्यागोभूम्यलीकन्यासापहारकूटसाक्ष्यलक्षणेभ्यः स्थूलासत्येभ्यो विरतिर्द्वितीयमणुव्रतं, तत्र कन्याली-

कं कन्यां सदोषामप्यदोषां विपर्ययं वा वदतः, सर्वद्विपदालीकोपलक्षणं चैतत्. गवालीकं गामल्पक्षीरामपि बहुक्षीरां विपर्ययं वा वदतः, इदमपि चतुष्पदालीकोपलक्षणं. भूम्यलीकं भुवं परसत्कामप्यात्मादिसत्कां विपर्ययं वा वदतः, एतदपि पादपाद्यपदन्यलीकोपलक्षणं, न च वाच्यं द्विपदचतुष्पदापदग्रहणमेव कस्मान्न कृतमिति.

कन्याद्यलीकानां लोकेऽतिगर्हितत्वेन रूढत्वात्, अत एव हि न्यासापहारकूटसाक्ष्ये अपि भेदेनोपात्ते. न्यासापहारो न्यासीकृतसुवर्णाद्यपलापः, कूटसाक्ष्यं प्रमाणीकृतस्य लंचामत्सरादिना कूटं वदतः, एतानि पंच क्लिष्टाशयसमुत्थत्वात्स्थूलासत्यादीनि २. सचित्ताचित्तमिश्रभेदाच्चौरव्यपदेशनिबंधनस्थूलादत्तपरस्वाद्विरतिस्तृतीयमणुव्रतं, सूक्ष्मं तृणजलेंधनदंतशोधनं नात्रावरुध्यते ३. स्वदारसंतोषः परदारवर्जनं वा चतुर्थं, परदाराः परकलत्राणि नारीदेवीतिरश्चीरूपाणि, तेषां वर्जनं, स्त्रियास्तु स्वभर्तृव्यतिरिक्तसर्वपुरुषवर्जनमिति ४. क्षेत्रवास्तुरूप्यस्वर्णधनधान्यद्विपदचतुष्पदकुप्यलक्षणस्य नवविधपरिग्रहस्य परिमाणकरणं पंचमाणुव्रतं ५. क्षेत्रं शस्योत्पत्तिभूमिः, तत् त्रिविधं सेतुकेतूभयभेदात्, सेतु यदरघट्टादिजलेन सिच्यते, केतुक्षेत्रमाकाशोदकनिष्पाद्यशस्यं, उभयमुभयजलनिष्पाद्यशस्यं. वास्तु

गृहादि ग्रामनगरादि च, गृहादि त्रिविधं, खातं भूमिगृहादि, उत्सृतं प्रासादादि, खातोत्सृतं भूमिगृहस्योपरि गृहादिसन्निवेशः २. रूप्यस्वर्णे स्पष्टे ४. धनं गणिमधरिममेयपरीक्षालक्षणं ५. उक्तंच—

गणिमं जाईफलफुप्फ—लाइधरिमं च कुंकुमगुडाइ ॥ मेयं चोप्पमलोणाइ । रयणपरिच्छिज्जं ॥ १ ॥ धान्यं व्रीह्यादि ६, द्विपदं कलत्रदासशुकादि, ७, चतुष्पदं गवाश्वादि ८, कूप्यं स्थालकचोलपल्यंकादिसर्वो गृहोपस्करः ९, एतानि पंचाणुव्रतानि मूलगुणा उच्यंते श्रावकधर्मतरोर्मूलकल्पत्वात. दिग्व्रतादीनि तु गुणव्रतशिक्षाव्रतानि शाखाप्रशाखाकल्पत्वाडुत्तरगुणाः. तत्रोर्ध्वाधस्तिर्यग्दिग्गमनपरिमाणकरणं दिग्विरतिव्रतं ६, भोगोपभोगयोः शक्त्या परिमाणकरणं भोगोपभोगव्रतं, तत्र सकृद्भोग्यस्तांबूलान्नस्रगादिर्भोगः, पुनःपुनर्भोग्यो वस्त्रांगनाभवनादिरुपभोगः, इदं च भोगोपभोगव्रतं, भोक्तुं योग्येषु परिमाणकरणेन तदितरेषु च वर्जनेन भवति. वर्जनीयानि च यथा—मद्यं मांसं नवनीतं । मधूदुंबरपंचकं ॥ अनंतकायमज्ञात—फलं रात्रौ च भोजनं ॥ १ ॥ आमगोरससंपृक्त—द्विदलं पुष्पितौदनं ॥ दध्यहर्द्वितयातीतं । कुथितान्नं च वर्जयेत् ॥ २ ॥ जंतुमिश्रं फलं पुष्पं । पत्रं वान्यदपि त्यजेत् ॥ संधानमपि संसिक्तं । जिनधर्मपरायणः ॥ ३ ॥

फलं मधूकबिल्वादेः, पुष्पमरणिशिगुमधूकादेः, पत्रं प्रावृषि तंदुलीयकादेः, इह च भोगोपभोगकरणं, धनोपार्जनमपि भोगोपभोग उपचारात्तत्परिमाणमपि भोगोपभोगव्रतं, यतः श्रावकस्य खरकर्मपरिहारेणाजीविका, एतच्चातिचारप्रक्रमे वक्ष्यते. अर्थाय शरीरादिकृते दंभो मनोवाक्कायैः प्राणिनां पीडनमर्थदंडो न तथानर्थदंडः, स चतुर्धा, तद्यथा—आर्तं रौद्रमपध्यान । पापकर्मोपदेशिता ॥ हिंसोपकारिदानं च । प्रमादाचरणं तथा ॥ १ ॥ तद्विरतिस्तृतीयं गुणव्रतं. तत्रापध्यानं वैरिगणदेशघाताय नृपखेचरत्वादिप्रार्थनारूपं मुहूर्तात्परतो वर्जनीयं, पापोपदेशं च वत्सतरदमनकर्षणादिकं पुत्रस्वजनादीन् विहायान्यत्र त्यजेत, यंत्रशस्त्राग्निहलमुशलोदूखलादीनि हिंस्रवस्तूनि च दाक्षिण्यविषयादन्यस्मै न दद्यात्. प्रमादाचरितं च द्यूतमद्यादिव्यसनं, कुतूहलाद्गीतनृत्तनाटकादिनिरीक्षणं, दोलाजलादिकेलिरनुबद्धकषायः सकलां रात्रिं स्वापो विकथा चेत्यादिकं वर्जयेदिति गुणव्रतानि ७. अथ शिक्षानामवसरः, तत्रेंद्रियमनःसमाहितस्य द्विविधत्रिविधं त्यक्तसावद्ययोगस्य मुहूर्तं समभावस्थितिः सामायिकव्रतं, अत्र च प्रतिपन्ने श्रावकोऽपि यतिरिव भवति. यदाह—सामाइयंमि उ कए । समणो इव सावओ हवइ जम्हा ॥ एएण कारणेणं । बहुसो सामाइयं कुज्जा ॥ १ ॥

इह च श्रावकः सामायिकं कुर्वंश्चतुर्षु स्थानेषु करोति, जिनगृहे साधुसमीपे पौषधशालायां स्वगृहे वा, यत्र वा विश्राम्य निर्व्यापारो वास्ते तत्र च. स च प्रतिपत्ता द्विविधः, ऋद्धिमान् अनृद्धिकश्च. तत्र ऋद्धिमान् साधुसमीपे यदा करोति तदायं विधिः—

यदि कस्मादपि भयं नास्ति, केनचिद्वादो नास्ति, ऋणं वा न धारयति, तदा स्वगृहेऽपि सा सामायिकं कृत्वा पंचसमितिसमितस्त्रिगुप्तिगुप्तः साध्वाश्रयं गत्वा साधून्नमस्कृत्य सामायिकं करोति 'करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि, जाव साहू पज्जुवासामि, दुविहंतिविहेणं' इत्यादि. एवं कृतसामायिक ईर्यापथिकायाः प्रतिक्रम्य पश्चादागमनमालोच्य यथाज्येष्ठमाचार्यादीन् वंदते, पुनर्गुरुं वंदित्वा प्रत्युपेक्ष्य निविष्टः शृणोति पठति पृच्छति वा. एवं जिनभवनादिष्वपि, केवलं तत्रागमनं नास्ति, यस्तु महर्धिकः सोऽकृतसामायिक एव सर्वविभूत्या तीर्थं प्रभावयन् जिनालयं साधुवसतिं वा गच्छति. आगतश्चासौ सामायिकं करोतीत्यादि पूर्ववत्. स च सामायिकं कुर्वन् मुकुटं कुंडले नाममुद्रां पुष्पं तांबूलं प्रावरकादि व्युत्सृजतीति ९.

दिग्व्रतप्रतिपन्नस्य दिक्परिमाणस्य दिवारात्रौ प्रहरादौ च संक्षेपणं देशावकाशिकं, शेषव्रतवि-

षयसंक्षेपणमप्यत्र द्रष्टव्यं, तत्संक्षेपस्याप्यवश्यं कर्तव्यत्वादिति १०. अष्टमीचतुर्दशीपूर्णिमामावास्यासु देशतः सर्वतो वा आहारशरीरसत्काराब्रह्मचर्यकुव्यापारपरिहारः पौषधव्रतं, तत्राहारपौषधो देशतो विवक्षितविकृतेरविकृतेराचामाम्लस्य वा सकृदेव द्विरेव वा भोजनामिति. सर्वतस्तु चतुर्विधस्य अहोरात्रं यावत्प्रत्याख्यानं. शरीरसत्कारपौषधश्च देशतः स्नानादेः शरीरसत्कारस्यैकतरस्याकरणं, सर्वतस्तु सर्वस्यापि, अब्रह्मचर्यपौषधोऽपि देशतो दिवैव रात्रावेव वा, सकृदेव द्विर्वा स्त्रीसेवां मुक्त्वा ब्रह्मचर्यकरणं, सर्वतस्तु अहोरात्रं यावद्ब्रह्मचर्यपालनं. कुव्यापारपौषधस्तु देशत एकतरस्य कस्यापि कुव्यापारस्याकरणं, सर्वतस्तु सर्वेषामपि गृहकर्मादीनामकरणं.

इह च देशतः कुव्यापारनिषेधं यदा करोति तदा सामायिकं करोति वा न वा, यदा तु सर्वतः करोति तदा नियमात्करोत्येव, अकरणे तत्फलेन वंच्यते. सर्वतः पौषधं च पौषधशालादौ त्यक्तमौक्तिकमणिसुवर्णाद्यलंकारो व्यपगतमाल्यविलेपनवर्णकः परिहृतप्रहरणः प्रतिपद्यते ११. न्यायागतानां प्रासुकैषणीयानामशनपानखाद्यस्वाद्यानां वस्त्रपात्रोपाश्रयादीनां चातिथेः साधोः संगतो देशकालश्रद्धासत्कारादिक्रमयुक्त आत्मानुग्रहबुद्ध्या विभागो दानमतिथिसंविभागो द्वादशं व्रतं. यदुक्तं

साहूण कप्पणिज्जं । जं नवि दिन्नं कहिंवि किंचि तहिं॥ धीराजहुत्तकारी । सुसावगा तन्न भुंजं
ति ॥ १ ॥ वसहीसयणासणभत्त—पाणभेसज्जवत्थपायाई ॥ जइवि न पज्जत्तधणो । थोवावि हु
थोवयं देइ १२.

एतानि सातिचाराणि न सम्यगित्यमीषु भोगोपभोगव्रतवर्जं पंचपंचातिचारा· परिहर्तव्या·, भो-
गोपभोगव्रते तु विंशतिः, तत्र प्रथमव्रते तावदमी–अतिक्रोधादिभिर्बंधो वधश्छविच्छेदोऽतिभारारोपणं
भक्तापाननिरोधश्चेति. तत्र क्रोधाद्बंधो गोमनुष्यादीनां प्राणापहारणनिरपेक्षं रज्जुदामनकादिना नि·
यमनं, न पुनर्यत्पुत्रादीनां विनयग्रहणार्थं चतुष्पदानां च रक्षार्थं यतनया क्रियते १. वधो लकुट·
कशादिना निर्दयताडनं क्रोधादेव, न पुनर्यद्व्रतसापेक्षं शिक्षार्थं यतनया पुत्राश्वादीनां लतादवर·
कादिना सकृद् द्विस्त्रिर्वा ताडनमिति. २. छविस्त्वक् शरीरं वा, तस्यां छेदः क्रोधाल्लोभाद्वा द्विपदच·
तुष्पदानां हस्तपादकर्णनासिकाछेदकर्णपाटनपृष्ठकर्तनादि, न पुनश्चिकित्सार्थं गंडपादवल्मीकोपहत·
पादादिच्छेदनमिति.

अधिकस्य वोढुमशक्यस्य भारस्यारोपणं क्रोधाल्लोभाद्वा, गोकरभरासभमनुष्यादेर्वहनाय यात्रं

तमेव सपराक्रमं वोढुं क्षमस्तावानेव भारोऽध्यारोप्य इत्यर्थः. भक्तादिनिरोधश्च क्रोधान्निर्दयं भृत्याध-मर्णादीनां, ज्वरितादीनां तु रोगचिकित्साहेतुत्वान्न दुष्यतीति ५. ननूपासकेन हिंसैव प्रत्याख्याता ततो बंधादौ क इव दोषः? सत्यं, हिंसाहेतुत्वतस्तेऽपि प्रत्याख्याता एव. न चैवं सति व्रतभंग एव, यतो द्विविधं हि व्रतमंतर्वृत्त्या बहिर्वृत्त्या च. तत्र यदा कोपाद्यावेशान्निर्दयं बंधादौ प्रवर्तते तदा वि-रत्यनपेक्षप्रवृत्तेरंतर्वृत्त्या व्रतभंगो हिंसाया अभावाच्च बहिर्वृत्त्या पालनमिति देशस्य भंजनाद्देशस्य पालनाच्चातिचारव्यपदेशः. एवमुत्तरेष्वपि भावना, बंधादयश्चेहोपलक्षणमभिचारमंत्रतंत्रप्रयोगादयोऽ-प्यतिचारतया ज्ञेया एते प्रथमव्रते १. मृषावादे तु सहसाभ्याख्यानं रहोऽभ्याख्यानं स्वदारमंत्रभेदो मृषोपदेशः कूटलेखकरणं चेति. सहसा अनालोच्याभ्याख्यानमसद्दोषाध्यरोपणं, यथा चौरस्त्वं पार-दारिको वेत्यादि १, रहसा एकांतेन हेतुभूतेनाभ्याख्यानं रहोऽभ्याख्यानं, इदमुक्तं भवति—रहसि मंत्रयमाणान् वीक्ष्यासत्संभावनयैवं वदति यदेते हीदं राजविरुद्धादिकं मंत्रयंते, एतच्च हास्यक्रीडा-दिना ब्रूते, न त्वभिनिवेशेन, तथा सति हि व्रतभंग एव. यदाह—

सहसाभ्भक्खाणाई। जाणंतो जइ करेज्ज तो भंगो ॥ जइ पुणणाभोगा—इहिं तो होइ

अइयारो ॥ १ ॥ स्वदाराणां मंत्रो विश्रंभभाषणं, तस्य भेदं प्रकाशनं, दारग्रहणं मित्राद्युपलक्षणं.
अस्य चानुवादरूपेण सत्यत्वेऽपि मंत्रप्रकाशनेन लज्जादितः कलत्रादेर्मरणादिसंभवेन तत्वतोऽस-
त्यत्वादतिचारता. मृषोपदेशो विवादादौ स्वयं परेण वान्यतरातिसंधानोपायोपदेशः, इह स्वयमेव व-
दतोऽन्यं शिक्षयतः किंचिद्व्रतसापेक्षत्वादतिचारता ४. कूटमसद्भूतं तस्य लेख कूटलेख, इह चा-
सत्यभणनमेव प्रत्याख्यातमिदं तु लेखनमिति व्रतसव्यपेक्षत्वेनातिचार इति ५. अथ तृतीयव्रते
स्तेनाहृतादानं १, तस्करप्रयोगः २, विरुद्धराज्यगमनं ३, कूटमानकरणं ४, तत्प्रतिरूपव्यवहारश्चेति ५.
स्तेनैराहृतं कुंकुमवस्त्रादि तस्यादानं, तद्विक्रोणक्रयेण मुधा वा कुर्वंश्चौर इति व्यपदिश्यते, यदाह—
चौरश्चौरापको मंत्री । भेदज्ञः काणकक्रयी ॥ अन्नदः स्थानदश्चैव । चौरः सप्तविधः स्मृतः ॥ १ ॥
इह व्रतभंगाद्वाणिज्यमेव करोमि न चौरिकामित्याशयेन व्रतसव्यपेक्षत्वादभंग इति भंगाभंगरूपो
ऽतिचारः १ तस्करप्रयोगश्चौराणां हरणक्रियायां प्रेरणा, यथा किमधुना यूयं निर्व्यापारास्तिष्ठथ? य-
दि वो भक्तादि नास्ति तदाहं तद्ददामि, भवदानीतमोषस्य यदि विक्रयको नास्ति, तदाहं विक्रेष्या-
मीत्यादि, अत्रापि भंगसापेक्षताभ्यामतिचारता भावनीयेति २.

विरुद्धो निजदेशस्वामिनः परिपंथी, तस्य राज्यं देशः कटकं वा, तत्र स्वस्वामिनो निषेधशासनमुल्लंघ्य गमनं, इह च यद्यपि—सामीजीवादत्तं । तित्थयरेणं तहेव य गुरुहिं॥ एयस्सा उ जा विरई । अदिन्नदाणस्स सा विरई ॥ १ ॥ इत्यदत्तादानलक्षणयोगात तत्कारिणां च चौर्यदंडयोगेन व्रतभंग एव, तथापि वाणिज्यमेवेदं मया कृतं, न चौर्यमिति भावनया व्रतसापेक्षत्वाल्लोके च चौरोऽयमिति व्यपदेशाभावादतिचारता ३. मानं कुडवादि पलादि हस्तादि, तस्य कूटत्वं हीनाधिकत्वं, हीनमानेन ददात्यधिकेन च गृह्णाति ४.

तस्य प्रस्तुतस्य व्रीह्यादेः प्रतिरूपं सदृशं, यथा व्रीहीणां पलिंजिः, घृतस्य वसा, तैलस्य मूत्रं, जात्यसुवर्णकर्पूरादीनां युक्तिसुवर्णकृत्रिमकर्पूरादि, तेन व्यवहारः, व्रीह्यादिषु पलंज्यादि प्रक्षिप्य तद्विक्रीणीत, एतौ च वंचनातः परधनग्रहणाद्भंगावेव, केवलं खात्रखननादिकमेव चौर्यं प्रसिद्धं, इयं तु वणिक्कलैव मया कृतेति भावनातोऽतिचाराविति ५. यदिवा पंचाप्यमी व्यक्तचौर्यरूपा एव, केवलं सहसानाभोगातिक्रमव्यतिक्रमादिभिर्विधीयमाना अतिचारतया व्यपदिश्यंते. ३.

मैथुने पुनरपरिगृहीतागमनमित्वरपरिगृहीतागमनमनंगक्रीडापरविवाहकरणं कामे तीव्राभिला-

षश्चेति ५. अपरिगृहीतायामप्यकुलांगनायां गमनं, तस्या लोके परदारतया रूढेस्तत्कल्पनया परस्य भर्तुरभावेनापरदारत्वाच्चातिचारः १. इत्वरकालं या परेण भाट्यादिना परिगृहीता वेश्या तस्यां गमनं, कथंचित्परदारत्वात्तस्या लोके परदारत्वारूढेश्च द्वितीयोऽतिचार. २. एतौ च परदारवर्जिन एव, न स्वदारसतोषिणः, शेषास्तु द्वयोरपि. यदाह—परदारवज्जिणो पंच । हुंति तिन्नि उ सदारसंतुट्ठे ॥ इत्थीए तिन्नि पंच च । भंगविगप्पेहिं नायवा ॥ १ ॥ अनंग कामस्तत्संबद्धा क्रीडा अधरदशनालिंगनकुचस्पर्शादिका, निधुवनमेव व्रतविषया नैषेति भावनया स्वदारसंतोषिणो वेश्यादौ, परदारवर्जिनः परदारेष्वनंगक्रीडामाचरतोऽतिचारता ३.

परेषां स्वापत्यव्यतिरिक्तानां विवाहकारणं, कन्याफललिप्सया स्नेहसंबद्धानां परिणयनविधानं, इदं च द्विविधं त्रिविधेन प्रतिपन्नस्थूलमैथुनव्रतस्य परविवाहकरणेऽर्थतो मैथुनकरणाद्व्रतभंग एव. किंतु तद्व्रती मन्यते विवाह एव मया तु विधीयते न मैथुनं कार्यते इति सापेक्षत्वादतिचारता. न च वाच्यं स्वापत्यविवाहेऽपि समानमेतदिति, यतस्तदकरणे तेषां स्वछंदचारित्वेन शासनोपघातादयो दोषाः स्युरिति. कामे तीव्राभिलापस्त्यक्तान्यकृत्यस्याहर्निशं तदेकाग्रता सुरतावसरे च तीव्रा-

गतया विविधाः कुचेष्टाः, श्रावको हि वेदोदयोपशांत्यर्थमात्रं मैथुनं सेवते. मैथुनमात्रादेव चोपशांतौ संभवत्यां तीव्रकामाभिलाषोऽर्थतः प्रतिषिद्धोऽतः प्रतिषिद्धाचरणाद्भंगः, नियमानाबाधया चाभंग इति भंगाभंगरूपोऽतिचारः ५.

स्त्रियास्तु स्वपुरुषसंतोषपरपुरुषवर्जनयोर्न भेदः, स्वपुरुषव्यतिरेकेणान्येषां परपुरुषत्वात्, अनंगक्रीडादयस्तु त्रयः स्युः पंच वा, कथं? तत्राद्योऽतिक्रमादिना परपुरुषमभिसरंत्या, द्वितीयः सपत्नीवारके स्वपतिं परिभुंजानायाः, शेषाः प्राग्वदिति ४. परिग्रहव्रते तु योजनात् क्षेत्रवास्तुप्रमाणातिक्रमः १, प्रदानाद्रूप्यसुवर्णप्रमाणातिक्रमः २, बंधनाद्धनधान्यप्रमाणातिक्रमः ३, कारणाद् द्विपदचतुष्पदप्रमाणातिक्रमः ४. भावात् कुप्यप्रमाणातिक्रमश्चेति ५. तत्र कृतक्षेत्रवास्तुप्रमाणस्याधिकतराभिलाषे व्रतभंगभयात् प्राक्तनक्षेत्रादेरासन्नमपरं गृहीत्वा तस्यैकत्वकरणाय सीमावृत्तिवरंडाद्यपनयनेन तत्तत्र योजयतः प्रथमातिचारः १. चतुर्मासाद्यवधिकृतस्वर्णरूप्यप्रमाणस्य कुतश्चिदधिकसंपत्तौ पूर्णेऽवधौ पुनर्गृहीष्यामीति बुद्ध्या व्रतसापेक्षत्वादन्यस्मै ददतो द्वितीयः २. प्रतिपन्नधनधान्यप्रमाणस्य तदधिकलाभसंभवे व्रतभंगभयाद्गृहगतधनादि विक्रये कृते गृहीष्यामीति भावनया बंधनान्मूटका-

दिरूपात्सत्यंकारदानादिरूपाद्वा स्वीकृत्य परस्यैव गृहे स्थापनतस्तृतीयः ३.

अंगीकृतद्विपदचतुष्पदप्रमाणस्य गोमहिषीवडवादेर्विवक्षितकालादर्वागेव प्रसवे आधिक्याद्व्रतभंगः स्यात्, इति कियत्यपि काले गते गर्भस्य कारणाद्गर्भस्थगवादिभावेन बहिस्तदभावेन च कथंचिद्व्रतातिक्रमाच्चतुर्थः ४. कुप्यस्य या संख्या यथा किल दश कच्चोलकानि मुत्कलानि, तस्या आधिक्यसंभवे व्रतभंगभयाद्भावेन पर्यायांतरेण भंजयित्वा बहुभिरपि दशैव कारयतः संख्यापूरणात्स्वाभाविकसंख्याबाधनाच्च पंचमः ५. इत्यणुव्रतातिचाराः. इदानीं गुणव्रतेषु, तत्र दिग्विरतिव्रते ऊर्ध्वाधस्तिर्यग्दिक्प्रमाणातिक्रमाः ३ क्षेत्रवृद्धिः ४ स्मृत्यंतर्धानं चेति ५. आद्यास्त्रय सुबोधा एव, नवरमूर्ध्वादिदिशां गमनमाश्रित्य प्रमाणातिक्रमोऽतिचारोऽनाभोगादिनातिक्रमादिना वा ३. क्षेत्रवृद्धिश्चैवं—

किल केनचित्सर्वदिक्षु योजनशतं दिग्व्रतमंगीकृतं, कदाचिच्च प्राच्यां वाणिज्यादिनासौ योजनशतमगमत, ततोऽपि परतः प्रभूतलाभो भवितेत्यपरस्यां नवतिं यास्यामीति विकल्प्य दशयोजनानि पूर्वस्यां वर्धयतो व्रतसापेक्षस्यातिचारः ४. स्मृत्यंतर्धानं विस्मृतिर्यथा पूर्वस्यां योजनशतं दिक्परि-

माणं केनचित्कृतं, गमनकाले च स्पष्टतया न स्मरति, किं शतं परिमाणं कृतमुत पंचाशत्, तस्य चैवं पंचाशतमतिक्रामतोऽतिचारः, शतमतिक्रामतो भंगः सापेक्षत्वान्निरपेक्षत्वाच्चेति ५. भोगोपभोगव्रते, तत्र भोगव्रते तु भोजनतस्तावदमी पंच. तद्यथा—सचित्ताहारः सचित्तप्रतिबद्धाहार, अपक्वौषधिभक्षणं चेति. एते च प्रत्याख्यातसचित्ताहारस्यैव द्रष्टव्याः. तत्र सचित्ताहारः कंदमूलफलादिः, अयं चानाभोगातिक्रमादिना ज्ञेयः. सचित्तेन वृक्षादिना प्रतिबद्धो गौंदादिः पक्वफलादिर्वा सचित्तांतर्बीजस्तस्याहारोऽनाभोगादिना, अथवा बीजं त्यक्ष्यामि कटाहं तु भक्षयिष्यामि, तस्याचेतनत्वादिति बुद्ध्या पक्वं खर्जूरादिफलं मुखे प्रक्षिपतोऽतिचारः २.

अपक्वाया औषधेः कणिक्कादिरूपायाः संभवत्सचित्तावयवाया अपि पिष्टत्वादचेतनेयमिति संभावनया भक्षणं ३. दुःपक्वाया वह्निना पक्वापक्वत्वेन संभवत्सचित्तावयवाया औषधेः पृथुकादेर्भक्षणं ४. तुच्छास्तथाविधतृप्त्यजनकत्वेनासारा औषधयः कोमलमुद्गानि फलीरूपास्तासां भक्षणं. आह—यद्येताः सचित्तास्तर्हि प्रथमातिचार एव, अथाचित्तास्तदा किं विरुद्धं? सत्यं, तद्भक्षणे तथाविधतृप्त्यजनकत्वेन निरर्थकं जीवघातस्यैवावशिष्यमाणत्वादचेतनीकृत्याप्यासां भक्षणमर्थतः प्रतिषिद्धं.

ततः प्रतिषिद्धाचरणान्नियमबाधनाच्चातिचारः. एवं रात्रिभोजनमद्यादिनिवृत्तिष्वप्यनाभोगादिभिःमा- दिभिरतिचारता भावनीया ५. एते पंच भोजनतः. कर्मतस्त्वमी—कर्मादानसंज्ञाः पंचदश श्लोकैः कथ्यंते, तद्यथा—

अंगार १ वन २ शकट ३—भाटक ४ स्फोटजीविका ५ ॥ दंत ६ लाक्षा ७ रस ८ केश ९ —विषवाणिज्यकानि च १० ॥ १ ॥ यंत्रपीडं ११ निर्लांछन १२—मसतीपोषणं १३ तथा ॥ दव- दानं १४ सरःशोष १५ । इति पंचदश त्यजेत् ॥ २ ॥ तत्र—अंगारभ्राष्ट्रकरणं। कुंभाय स्वर्णकारि- ता ॥ ठठारत्वेष्टिकापाका—विति ह्यंगारजीविका ॥ १ ॥ छिन्नाछिन्नवनपत्र—प्रसूनफलविक्रयः ॥ कणानां दलनोत्पेषाद् । वृत्तिश्च वनजीविका ॥ २ ॥ शकटानां तदंगानां । घटनं खेटनं तथा ॥ वि- क्रयश्चेति शकट—जीविका परिकीर्तिता ॥ ३ ॥

शकटोक्षलुलायोष्ट्र—खराश्वतरवाजिनां ॥ भारस्य वाहनाद्वृत्ति—र्भवेद्भाटकजीविका ॥ ४ ॥ सरःकूपादिखनन—शिलाकुट्टनकर्मभिः ॥ पृथिव्यारंभसंभूतै—र्जीवनं स्फोटजीविका ॥ ५ ॥ दंत केशनखास्थित्वग्—रोम्णां ग्रहणमाकरे ॥ त्रसांगस्य वणिज्यार्थं । दंतवाणिज्यमुच्यते ॥ ६ ॥ ला-

दामनःशिलानीली—धातकीटंकणादिनः ॥ विक्रय. पापलसनं । लादावाणिज्यमुच्यते ॥ ७ ॥ न-
वनीतवसाक्षौद्र—मद्यप्रभृतिविक्रयः ॥ द्विपाच्चतुष्पाद्विक्रयो । वाणिज्यं रसकेशयोः ॥ ८ ॥ विषा-
स्त्रहलयंत्रायो—हरितालादिवस्तुनः ॥ विक्रयो जीवितघ्नस्य । विषवाणिज्यमुच्यते ॥ ९ ॥ तिलेक्षु-
सर्षपैरंम—जलयंत्रादिपीडनं ॥ दलतैलस्य च कृति—र्यंत्रपीडा प्रकीर्तिता ॥ १० ॥ नाशावेधोंक-
नं मुष्क—छेदनं पृष्टगालनं ॥ गोकर्णकंबलछेदो । निर्लांछनमुदीरितं ॥ ११ ॥ सारिकाशुकमार्जा-
र—श्वकुक्कुटकलापिनां ॥ पोषो दास्याश्च वित्तार्थं—मसतीपोषणं विदुः ॥ १२ ॥ व्यसनात्पुण्य
बुद्ध्या वा । दवदानं भवेद् द्विधा ॥ सरःशोषः सरःसिंधु—ह्रदादेरंबुसंप्लवः ॥ १३ ॥ दिग्मात्रं चेदं,
एवंजातीयानां सावद्यकर्मणां न तु परिगणनमिति. एतानि चानाभोगादिना अतिचाराः, आकुट्या
क्रियमाणानि तु भंगा एव.

इह चैवं विंशतिसंख्यातिचाराभिधानं व्रतांतरेष्वपि पंचातिचारसंख्यया तज्जातीयानां विविधा-
नां संग्रह इति ज्ञापनार्थं. तेन स्मृत्यंतर्धानादयो यथासंभवं सर्वव्रतेषु द्रष्टव्याः ७. अनर्थदंडविरतौ
तु कंदर्पः कौकुच्यं मौखर्यं संयुक्ताधिकरणता भोगोपभोगाधिक्यं चेति. कंदर्पः कामः, तद्धेतुस्तत्प्र-

धानो वाक्प्रयोगोऽपि कंदर्पः, इह सामाचारी—श्रावकेण स्वस्य परस्य वा मोहोद्दीपकं न वाच्यं. कौकुच्यं भ्रूनयनोष्टनासाकरचरणमुखविकारैरनेकप्रकारा भंडादिक्रिया, एतौ द्वावपि प्रमादाचरितस्यातिचारौ २. मुखरो वाचाटस्तस्य कर्म मौखर्यमसभ्यासंबद्धप्रलापित्वं, अयं च पापोपदेशस्यातिचारः ३. अधिकरणं हलोदूखलशकटादि संयुक्तं फलादिसंयोगेन प्रगुणीकृतं तद्भावः, तथा श्रावकेण हि तत्संयुक्ताधिकरणं न धारणीयं, तथा सति हि यः कश्चिद्याचते, अन्यथा तु सुखेन परः प्रतिषेधयितुं शक्यते, हिंस्रप्रदानस्य चासावतिचारः ४. भोगोपभोगाधिक्यं स्नानीयतैलामलकभोजनचंदनकुंकुमकस्तूरिकावस्त्राभरणादीनामतिरिक्तानामारंभः, प्रमादाचरितस्यायमतिचारः ५. सर्वेऽप्यमी अनाभोगादिनैव क्रियमाणा अतिचाराः, आकुट्या तु भंगा एव ८. इति गुणव्रतातिचाराः. अथ शिक्षाव्रतेषु, तत्र तावत्सामायिके मनोवाक्कायदुःप्रणिधानानि ३ स्मृत्यकरणमनवस्थितकरणं चेति. तत्र मनःप्रभृतीनां दुःप्रणिधानमनाभोगादिना सावद्यचिंतादिषु प्रवर्तनं ३ स्मृतेरकरणं प्रबलप्रमादो नैवं स्मरति यदुतास्यां वेलायां सामायिकं कर्तव्यं कृतं न कृतं वेति, स्मृतिमूलं च मोक्षानुष्ठानं ४. अनवस्थितकरणं यत्करणानंतरमेव त्यजति. यथाकथंचिद्वा अनादृतः करोति ५. ९. देशावकाशि-

के पुनरानयनप्रयोगः प्रेष्यप्रयोगः शब्दानुपातो रूपानुपातो बहिःपुद्गलप्रक्षेपश्चेति. तत्र स्वयं गमने व्रतभंगः स्यादिति धिया परेण नियमितक्षेत्राद्बहिःस्थस्य पदार्थस्यात्मसमीपे प्रापणमानयनप्रयोगः १. स्वयं गमने व्रतभंग इत्याशयाद्विवक्षितक्षेत्राद्बहिः प्रयोजनाय प्रेष्यस्य व्यापारणं प्रेष्यप्रयोगः, देशावकाशिकव्रतं हि माभूद्गमनादिभिः प्राणिघात इत्याशयेन गृह्यते, स तु स्वयं कृतोऽन्येन वा कारित इति न कश्चित्फले विशेषः. प्रत्युत स्वयं गमने ईर्यापथविधेर्गुण इति २. नियमविषयक्षेत्राद्बहिःस्थितं कंचन नरं दृष्ट्वा व्रतभंगभयादाह्वातुमशक्नुवन् यदा स्वकीयकाशितादिशब्दश्रावणनिजरूपदर्शनव्याजेन तमाकारयति तदा शब्दानुपातरूपानुपातौ ४. व्रतविषयक्षेत्राद्बहिर्विवक्षितजनाकारणार्थं पुद्गलस्य लोष्टादेः क्षेपणं बहिःपुद्गलक्षेपः. इहाद्यौ द्वावव्युत्पन्नस्य, अंत्यत्रयं तु मायाविनः, इह च दिग्व्रतसंक्षेपणवत् व्रतांतराणामपि संक्षेपकं देशावकाशिकं, किंतु प्राणातिपातादिसंक्षेपेषु वधबंधादय एवातिचाराः, दिग्व्रतसंक्षेपे तु संक्षिप्तत्वात् क्षेत्रस्यानयनप्रयोगादय इति १०.

पौषधव्रते पुनरप्रत्युपेक्षाप्रमृज्य च स्थंडिलभुवमुच्चारप्रश्रवणखेलसंघाणकादीनामुत्सर्गः १. अप्रत्युपेक्ष्याप्रमृज्य पीठफलकादीनामादाननिक्षेपौ २. अप्रत्युपेक्षाप्रमृज्य च संस्तारकन्यासः ३. स्मृत्य-

करणमनवस्थितकरणं चेति ५. स्पष्टाश्चैते, नवरं प्रत्युपेक्षणं चक्षुषा निरीक्षणं, प्रमार्जनं रजोहरणवस्त्रप्रांतादिना विशुद्धिकरणं. इह चाप्रत्युपेक्षणेन दुःप्रत्युपेक्षणं अप्रमार्जनेन दुःप्रमार्जनं च संगृह्यते. नञः कुत्सार्थस्यापि दर्शनादिति ११. अतिथिसंविभागव्रते तु सचित्तनिक्षेपः, सचित्तपिधानं कालातिक्रमः परव्यपदेशो मत्सरश्च. सचित्ते पृथिव्यादावदित्सया साधुदेयस्य वस्तुनो निक्षेपः स्थापनं १. सचित्तेन कुष्मांडफलादिना पिधानं स्थगनं २. कालस्य साधूचितभिक्षासमयस्यातिक्रमोऽनागतमेव भिक्षाकालं लंघयित्वा वा भोजनकरणमित्यर्थः. परस्यान्यस्य संबंधीदं गुडखंडादि, न मदीयमिति व्यपदेशो व्याजः ४. मत्सरोऽसहनं साधुभिर्याचितस्य कोपनमथवा स कश्चिद्रंकमात्रोऽपि ददाति, अहं तु किं ततोऽपि हीन इत्यहंकारो वा मत्सर इति ५. अनाभोगातिक्रमादिभिश्चैतेऽतिचाराः, अन्यथा तु भंगाः. इत्युक्तो लेशतः सातिचारव्रतविषयः: विस्तरस्त्वावश्यकादिभ्योऽवसेय इति गाथार्थः ॥ ३ ॥ अथ यतिधर्ममाह—

॥ मूलम् ॥—खंती य मद्दवज्जव—मुत्ति तवसंजमे य बोधव्वे ॥ सच्चं सोयं आकिं—चणं च बंभं च जइधम्मो ॥४॥ व्याख्या—क्षांतिः क्रोधनिग्रहः, चकार उत्तरपदसमुच्चयार्थः, 'खंत्तिएत्ति' पाठे-

सहार्थे तृतीया, मार्दवमस्तब्धत्वं, आर्जवमकौटिल्यं, मुक्तिर्निर्लोभता, तदियता रागद्वेषाभाव उक्तः, यद्वाचि वाचकेन—मायालोभकषाय—श्चेत्येतद्रागसंज्ञितं द्वंद्वं ॥ क्रोधो मानश्च पुन—र्द्वे इति समास निर्दिष्टः ॥ १ ॥ ततश्चानेन सामायिकमुक्तं भवति, रागद्वेषाभावरूपत्वात्तस्य. यदाह—जो समो सव्वभूएसु । तसेसु थावरेसु य ॥ तस्स सामाइयं होइ । इइ केवलिभासियं ॥ १ ॥ तपो द्वादशविधमनशनादि, तदाभ्यां गाथाभ्यामवसेयं—अणसणमूणोयरिया । वित्तिसंखेवणं रसच्चाओ ॥ कायकिलेसो संलीण—या य बज्झो तवो होइ ॥१॥ पायच्छित्तं विणओ । वेयावच्चं तहेव सज्झाओ ॥ झाणं उस्सग्गोवि य । अभ्भिंतरओ तवो होइ ॥ २ ॥ विनेयानुग्रहायानयोः किंचिद्व्याख्यानमुच्यते—

तत्रानशनमाहारत्यागः, तच्चेत्वरं यावत्कथिकं च, तत्रेत्वरं चतुर्थादिषण्मासांतं, यावत्कथिकं तु भक्तपरिज्ञेंगिनीपादपोपगमनभेदात् त्रिधा, तत्राद्यं सप्रतिकर्मत्रिविधचतुर्विधाहारत्यागनिष्पन्नं, द्वितीयं त्वप्रतिबद्धकर्मचतुर्विधाहारत्यागनिष्पन्नमिंगितदेशे चंक्रमणाद्यपरिहारवत्, तृतीयमपि तथैव, नवरं सर्वथा परिस्पंदवर्जवत. ऊनोदरिका, इह द्वात्रिंशत्कावलिकमाहारप्रमाणं, तत एकेनापि कवलेन न्यूनमूनोदरता, तथाहि—बत्तीसं किल कवला । आहारो कुच्छिपूरओ भणिओ ॥ पुरिसस्स महि-

भव कवला ॥ १ । छ ६ ८ ६ ७ वृत्तिसंक्षेपणं गृह-

शन- लियाए । छठा भव ... चउवीस ४ तहेकतीसा ५ य ॥ २ ॥

णा ५ ॥ छठ १ दुवालस २ सोलस ३ । चउवीस ४ तहेकतीसा ५ य ॥ २ ॥ वृत्तिसंक्षेपणं गृह- कायक्लेशः

टीका भिक्षादिपरिमाणकरणं, रसपरित्यागो रसानां दुग्धदध्यादीनां सर्वेषामन्यतरेषां वा त्यागः, कायक्लेशः प्रायो बाह्य-

७८ केशोत्पाटनवीरासनादिविधानशीतादिसहनादि, संलीनता विशृंखलमनोवाक्कायसंवृत्तिः, प्रायो बाह्य- तथा प्रायश्चित्तमा

स्यैव शरीरस्य तापनाल्लौकिकैरपि तपस्तया प्रतीयमानत्वाच्च बाह्यं तपो भवतीति. तथा प्रायश्चित्तमा प्रतिपत्तिविशेषः,

लोचनादिदशविधं, विनयकर्म विनयनहेतुर्गुर्वादिष्वभ्युत्थानांजल्यासनदानादिरूपः प्रतिपत्तिविशेषः,

वैयावृत्त्यमाचार्यादीनां दशानां भक्तादिभिरुपष्टंभो, यदाह—

आयरिय १ उवज्झाए २ । थेर ३ तवस्सी ४ गिलाण ५ सेहाणं ६ ॥ साहम्मिय ७ कुल ८

गण ९—संघ १० संगयंतमिह कायव्वं ॥ १ ॥ तथैवेति समुच्चये, स्वाध्यायः पंचधा वाचनादिः,

ध्यानमार्त्तादि चतुर्धा, तत्राद्ययोर्भवहेतुत्वादितरयोश्च मुक्तिहेतुत्वाद्धर्म्यशुक्ले एव तपः. उत्सर्गस्त्या-

गः, स च द्रव्यतो गणशरीरोपध्याहारभेदाच्चतुर्धा, भावतस्तु क्रोधादित्यागरूपत्वादनेकधा, अपि चे-

ति समुच्चये, कर्मनिर्जरणंप्रत्यंतरंगत्वादभ्यंतरकं तपो भवति. तथा संयमः सप्तदशभेदः, तथा च—

पुढविदगअगणिमारुय—वणस्सइबितिचउपणिंदिअजीवे ॥ पेहोपेहपमज्जण—परिठवणमणोवई काए ॥ १ ॥ अस्या अर्थः—पृथिव्यादिपंचेंडियांतानां जीवानां मनोवाक्कायैः करणकारणानुमतितः संघट्टनपरितापनोपद्रवणपरिहाररूपो नवविधः संयमो भवति ए. अजीवसंयमस्तु पुस्तकाप्रत्युपेक्ष्य डःप्रत्युपेक्ष्यडुष्यन्तृणवर्मपंचकहिरण्यादीनामग्रहणरूपः, तत्र—गंभीकबविमुठी । संपुम्फलए तहाठिवाडीय ॥ एयं पुब्वयपणयं । वक्काणमिणं भवे तस्स ॥ १ ॥ बाहल्लपुहुत्तेहिं । गंभीपुब्बो उ तुल्लगो दहो ॥ कबवि अंते तणुउ । मज्झे पिहुलो मुणेयवो ॥ २ ॥ चउरंगुलदीहो वा । वट्टागिइमुठिपुब्बगो अहवा ॥ चउरंगुलदीहोच्चिय । चउरंसो होइ विन्नेउ ॥ ३ ॥ संपुम्मो डुगमाई फलगावुबं ठिवाम्भिमित्ताहे ॥ तणुपत्तूसियरूवो । होइ ठिवाम्भी बुहा बिंति ॥ ४ ॥ दीहो बाहल्लो वा । जो पिहुलो होइ अप्पबाहल्लो ॥ तं मुणिय समयसारा । ठिवाडिपुत्तं भणंतीह ॥ ५ ॥ अप्पम्भिलेहीय दूसे । तूली श्वहाणगं च नायबं ॥ गंरुवहाणालिंगणि । मसूरए चेव पुत्तमए ॥ ६ ॥ पल्हविको य विपावार । नवतपहनयदाढिगालीय ॥ डुप्पम्भिलेहियदूसे । एयं बीयं भवे पणगं ॥

॥ ७ ॥ [illegible]

ज्ञेया ॥ ८ ॥ अत्र वृद्धसंप्रदाय —
दृढच्छुरणं खुरणं खुरमं १ कोयववूरठिगा २ पावारोसलमपडज्ज ३ नवलजीणं ४ ददगा-
लीधोलपुत्ती सदसवहत्ति नाणियं होइ ५. तणपणगं पुण भणियं । जिणेहिं कम्मठगंठिमहणेहिं
॥ सा लीवीहीकोद्दव—रालगरत्तेतणाइं च ॥ ९ ॥ अयएलगाविमहिसी । मिगाणमजिणं च पं
चमं होइ ॥ तलिगाखल्लगवज्झे । कोसगकत्तीयबीयं तु ॥ १० ॥ ग्रहणेऽपि संयम एव, यदाह—
डुप्पडिलेहियपणगं । अट्ठाणाई विवित्तगिक्खत्ति ॥ घिप्पइ पुत्थयपणयं । कालियनिज्जुत्तिकोसट्ठा
॥ ११ ॥ अपवादतस्तु पुस्तकपंचकादि १०. प्रेक्षासंयमः प्रत्युपेक्ष्य प्रमृज्य च स्थाननिषदनादिवि-
धानं ११. उपेक्षासंयमस्तु द्विधा व्यापारे अव्यापारे च. तत्र व्यापारोपेक्षासंयमो यत्सांभोगिकसा-
धून् सीदत इतरांश्च प्रावचनिककार्येषु प्रेरयति, अव्यापारोपेक्षासंयमस्तु यत्सावद्यकर्मसु सीदंतं गृ-
हस्थमुपेक्षते १२. प्रमार्जनासंयमः पुनर्यत्सागारिकसमक्षं पथि गच्छन् वसतौ वा प्रविशन् पादौ न
प्रमार्ष्टि, तदभावे च प्रमार्ष्टि १३. परिष्ठापनासंयमस्तु जीवसंसक्ताधिकानेषणीयक्षेत्रकालातिक्रांतभक्त-
पानकादेरुच्चारप्रश्रवणनिष्ठीवनादेश्च विधिना त्यागः १४. मनःसंयमः पुनस्तस्यैवाकुशलस्य निरोधः.

कुशलस्य चोदीरणं १५. एवं वाक्संयमोऽपि १६. कायसंयमस्तु सति कार्ये उपयोगतो गमनागमनादिविधानं, तदभावे संवृत्तकरचरणाद्यवयवस्यावस्थानमिति १७.

अथ प्रकृतमभिधीयते—इह च केषुचित्पदेषु प्राकृतवशाद्विभक्तिलोपो दृष्टव्यः, यदिवा संयमशब्दांतः समाहारो द्वंद्व, मुक्तिशब्दस्य च दीर्घत्वं प्राकृतप्रभवं बोधव्यं, इत्यग्रेऽपि संयोत्स्यते. सत्यं सम्यग्वाद., शौचं द्रव्यतो निर्लेपता, भावतोऽनवद्यसमाचार. स चेह प्रस्तावादस्तेयलक्षणः. किंचिनं द्रव्यमुच्यते, नास्य किंचनमस्तीत्यकिंचनस्तस्य भाव आकिंचन्यं निर्ग्रंथतेत्यर्थः. अथ मुक्तिशब्देनैव गतार्थमिदमिति चेन्न, संयमार्थं निर्लोभस्य वस्त्रपात्रकंबलादि धारयतोऽपि आकिंचन्यप्रतिपादनार्थत्वादस्य, यदाह—जंपि वत्थं व पायं वा । कंबलं पायपुंछणं ॥ तंपि संजमलज्जठा । धारिंति परिहरंति य ॥ १ ॥

न सो परिग्गहो वुत्तो । नायपुत्तेण ताइणा ॥ मुच्छापरिग्गहो वुत्तो । इइ वुत्तं महेसिणा ॥ ॥ २ ॥ ब्रह्म ब्रह्मचर्यं नवब्रह्मगुप्तिसनाथब्रह्मचर्यपरिपालनमित्यर्थः, चकारः समुच्चयार्थः. यतेरनगारस्य धर्मो यतिधर्मो बोधव्यः, इह च संयमादिभिः पदैर्महाव्रतप्रतिपादनेन सकलसावद्यव्यापारप्रत्या-

ख्यानमित्युक्तं भवति, ततः सामायिकपुरस्सरमहाव्रतप्रतिपादनेन संपूर्णो यतिधर्मः प्रोक्तो भवति,
तपःप्रतिपादनात्तु पूर्वार्जिताशुभकर्मनिर्जरणाशुद्धिरभिहितेति कृतं प्रसंगेनेति गाथार्थः ॥ ४ ॥ गृ-
हियतिभेदाद् द्वेधाप्युक्तो धर्मोऽधुना तद्दायकग्राहकयोरल्पत्वमाह—

॥ मूलम् ॥—रयणत्थिणोवि थोवा । तद्दायारो य जहेव लोगम्मि ॥ इय सुद्धधम्मरयण—
त्थिदायगा दढयरं नेया ॥ ५ ॥ व्याख्या—रत्नानि वैडूर्यादीनि. तान्यर्थयंते ते रत्नार्थिनः स्तोका
अल्पा, तत्प्रयोजनमूल्यपुण्यवतामल्पत्वात् तेषां रत्नानां दातारो विक्रेतारः स्तोका इति योगः. वि-
निमयाभावात. अपिशब्दो परस्परसमुच्चये. यथैव लोके प्रजासु. इत्यनेन प्रकारेण शुद्धः सर्वज्ञप्र-
णीतत्वेनाश्रद्धेयतासद्भूतत्वपूर्वापरविरोधित्वादिकलंकरहितः, स चासौ धर्मश्च, स एव सकलसमी-
हितार्थसाधकत्वाद्रत्नं चिंतामणिस्तस्यार्थिनो दायकाश्च दृढतरमत्यर्थं स्तोका इति योगो ज्ञेया बोध-
व्या.. इदमत्र हृदयं—यथा तृणेंधनकणलवणाद्यसारद्रव्याणां ग्राहका दातारश्च प्रभूताः प्राप्यंते, त-
त्प्राप्तेरनायासलभ्यत्वात्. तथैव कुधर्मस्य ग्राहिणो दायिनश्च प्रभूततमाः. तथाविधभवाभिनंदिनां भू
यस्त्वादिति गाथार्थः ॥ ५ ॥ अथ धर्मरत्नयोग्यं निरूपयन् गाथात्रयमाह—

॥ मूलम् ॥—धम्मरयणस्स जोगो । अक्खुद्दो रूववं पगइसोमो ॥ लोयप्पिउ अकूरो । भी-रू असठो सुदक्खिन्नो ॥ ६ ॥ लज्जालुउ दयालू । मज्झत्थो सोमदिट्ठि गुणरागी ॥ सक्कह सुपक्ख-जुत्तो । सुदीहदंसी विसेसन्नू ॥ ७ ॥ वड्ढाणुगो विणीउ । कयण्णुउ परहियत्थकारी य ॥ तह चेव लद्धलक्खो । इगवीसगुणेहिं संजुत्तो ॥ ८ ॥ व्याख्या—धर्मरत्नस्य योग्य उचितोऽक्षुद्राद्येकविंशति-गुणैर्युक्तो भवतीति समुदायार्थः, तत्र क्षुद्रस्तुच्छो, न तथा, गंभीरशय इत्यर्थः, तस्य हि अलब्ध-मध्यत्वेन धर्मप्रति क्षोभयितुमशक्यत्वात् १. रूपवानहीनपंचेंद्रियः सुप्रमाणसर्वावयवसंपन्नो वा तस्या-पि धर्मप्रभावकत्वात्, तथा च—

धम्मोदएण रूवं । करेंति रूवस्सिणोवि जइ धम्मं ॥ गज्झवउ य सुरूवो । पसंसिमो तेण रूवंति ॥ १ ॥ गज्झवउ ग्राह्यवाक् २. प्रकृतिसोमः स्वभावेनैव सुधांशुवदानंदकारी ३. लोकानां विशिष्टजनानां विनयादिगुणैः प्रियो वल्लभः, को हि गुणवतःप्रति प्रीतो न भवति? यस्तु न लोक-प्रियः स न केवलमात्मानं, स्वस्य धर्मानुष्ठानमपि परैर्दूषयन् परेषां बोधिलाभभ्रंशहेतुर्भवति ४. क्रूरो दुरभिसंधिर्न तथा अद्रोहक इत्यर्थः ५. भीरुर्जनापवादात्पापेभ्यो वा भयवान् ६. शठो माया-

वी, न तथा, सरलाशय इत्यर्थः ७. सुष्टु दाक्षिण्यमस्य सुदाक्षिण्योऽत्यंतोपरोधशील ८. लज्जा वैयात्याभावः. सा विद्यते यस्य स लज्जालु, स हि प्राणप्रहाणेऽपि न प्रतिज्ञामुपजहाति. यदाह—लज्जां गुणौघजननी जननीमिवार्यां—मत्यंतशुद्धहृदयामनुवर्तमानाः ॥ तेजस्विनः सुखमसूनपि संत्यजंति । सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञां ॥ १ ॥ ९. दया दुःखिजंतुत्राणाभिलाष, सा विद्यते यस्य स दयालुः. धर्मस्य दया मूलमिति ह्यामनंति सूरयः १०. मध्यस्थ आयव्ययतुलनेन समयोचितकारी, यदिवा रागद्वेषयोरंतराले तिष्ठतीति मध्यस्थ . तस्यैव धर्मयोग्यत्वात. यदाह—रत्तो दुठो मूढो । पुव्विं वुग्गाहिओ य चत्तारि ॥ एए धम्मस्सणरिहा । अरिहो पुण होइ मझ्झत्थो ॥ १ ॥ सोमे शांते परवृद्धिदर्शनेऽप्यदृष्टविकारे दृष्टी लोचने यस्य स तथा. न परवृद्धिद्विष्टमत्सर इति १२.

गुणेषु सौजन्यौचित्यादिषु रागी. रागस्तु बहुमानप्रशंसासाहाय्यकरणादिनानुकूला प्रवृत्तिः. गुणानुरागिणो हि जीवा अवंध्यपुण्यबीजनिषेकेणेहामुत्र च गुणग्रामसंपदमारोहंति १३. सती शोभना परपरिवादात्मोत्कर्षरहिता कथा वचनपद्धतिः सत्कथा. शोभनः प्रत्यक्षलोकाद्यविरुद्धः पक्षः प्रतिज्ञा सुपक्षः, ताभ्यां युक्तः समेतः १४. सुतरामतिशयेन दीर्घकालभावित्वाद्दीर्घमर्थमनर्थं च पश्यति

पर्यालोचयतीत्येवंशीलः सुदीर्घदर्शी १५. वस्त्ववस्तुनोः कृत्याकृत्ययोः स्वपरयोश्च विशेषमंतरं जानातीति विशेषज्ञः, अविशेषज्ञो हि पुरुषः पशोर्नातिरिच्यते, अथवा विशेषमात्मन एव गुणदोषाधिरोहणलक्षणं जानातीति विशेषज्ञः, यदाह—प्रत्यहं प्रत्यवेक्षेत । नरश्चरितमात्मनः ॥ किं नु मे पशुभिस्तुल्यं । किं नु सत्पुरुषैरिति ॥ १ ॥ १६. वृद्धाः शीलज्ञानाभ्यां गुरवस्ताननुगच्छति सेवांजल्यासनदानाभ्युत्थानादिभिराराधयतीति वृद्धानुगः, ते ह्येवमनुगम्यमाना नियमात्कल्पतरव इव सदुपदेशादिभिः फलंति. १७.

विनीतः पूर्वोक्तविनयसंपन्नः, स चागर्वितया सदैव गुरुषु विनयं प्रयुंजानोऽनुत्तरां श्रुतादिसंपदमासादयति, उक्तं च—विणयाउ नाणं नाणाउ । दंसणं दंसणाउ चारित्तं ॥ चरणाहिंतो मुक्खो । मुक्खे सोक्खं अणाबाहं ॥ १ ॥ १८. कृतं जानातीति कृतज्ञः, स एव कृतज्ञकः, स हि स्तोकोपकारकारकमपि बहुमन्यते १९. परेषां हितार्थं समीहितप्रयोजनं तत्करोतीति परहितार्थकारी, परोपकारपरो हि पुमान् सर्वस्य नेत्रामृतांजनं २०. चः समुच्चये; तथा तेन गुणस्वरूपलक्षणप्रकारेण, चैवेति समुच्चये, लब्धलक्षः प्रत्यासन्नमुक्तिगमनत्वेन सकलसत्क्रियासु प्राप्तकौशलः २१. गुण-

गुणिनोरभेदोपचारविवक्षयेत्थं भूतैकविंशतिगुणयुक्तो धर्मरत्नयोग्यो भवतीति योजितमेव. इह च धर्मलोकाबाधया एकद्वित्र्यादिगुणाभावेऽपि धर्मयोग्यत्वमुन्नेयमिति गाथात्रयार्थः ॥ ८ ॥ इति श्रीदेवभद्राचार्यविरचिते दर्शनशुद्धिप्रकरणविवरणे द्वितीयं धर्मतत्वं समाप्तं ॥ श्रीरस्तु ॥

———

व्याख्यातं द्वितीयं धर्मतत्वं, अथ मार्गतत्वस्यावसरः. अस्य च पूर्वेण सहायं संबंधः—पूर्वं गृहिधर्मो यतिधर्मश्च प्रत्यपादि, तत्र गृहिधर्मो द्रव्यस्तवमार्गानुपाती. यतिधर्मश्च भावस्तवमार्गानुपातीति प्रस्तावादुभयरूपमपि मार्गं प्रतिपादयिषु शृंखलया तत्प्रस्तावनामाह—

॥मूलम्॥—दुलहा गुरुकम्माणं । जीवाणं सुद्धधम्मबुद्धीवि ॥ तीए सुगुरु तंमिवि । कुमग्गठिइसंकलाभंगो ॥ १ ॥ व्याख्या—दुर्लभा दुःप्रापा, गुरूणि क्लिष्टाध्यवसायजनितत्वेन स्थित्यादिभिर्महांति कर्माणि दर्शनचारित्रमोहनीयादीनि येषां ते. तथा तेषां जीवानां प्राणिनां, काऽसौ? शुद्धधर्मबुद्धिरपि, तत्र शुद्धः प्रबलमोहावृतप्राणिनिस्तारकोऽसत्प्रवृत्तिकलंकरहितः, स चासौ धर्मश्च, तत्र बुद्धिरभिलापः. शुद्धधर्मबुद्धिः, आस्तां कायेनानुष्ठानमित्यपेरर्थः; अथ कथंचिद्भवितव्यतायोगाज्ज्ञा-

तायामपि तस्यां ' धम्मणू धम्मकत्ताय ' इत्यादिवक्ष्यमाणलक्षणः सुगुरुर्दुर्लभ इति सर्वत्र संबंधनीयं. तदभावे तस्या अपि निष्फलत्वात, अथ कुतोऽपि कर्मविवरात्तस्मिन्नपि गुरावपि प्राप्ते इत्यर्थः, कुत्सितः शिवपुरप्रतिपंथित्वेन मार्गः पंथा तस्य स्थितिर्व्यवस्था, सैव संसारचारकनिर्गमननिरोधकत्वेन संकला लोहमयबंधनं कुमार्गस्थितिसंकला, तस्या भंग इव भंगोऽतिलंघनमित्यर्थः.

इदमत्र हृदयं—यद्यपि कश्चिद्विशिष्टकर्मक्षयोपशमात्सद्गुरुसंप्रयोगाच्च समुल्लसितविवेको विशुद्धधर्मोत्साहवान् भवति, तथाप्यत्यंतगुरुकर्मप्राग्भाराक्रांततया भवाभिनंदिभिर्गौरवत्रितयप्रतिबद्धैः प्रवर्तितस्वाभिप्रेताचारैरागमप्रतिपंथिभिस्तथाविधमूढजनैः सदाचारविमुखप्रभूतजनमेलनेन बलादप्यसौ कुमार्गे व्यवस्थाप्यत इति गाथार्थः ॥ १ ॥ प्रस्तावनापूर्वं कुमार्गमेवाह—तथाहीति निपातसमुदायोऽयमुपप्रदर्शने.

॥ मूलम् ॥—जिणभवणे अहिगारो । जइणो गिहिणोवि गब्बपडिबद्धा ॥ जह तह देयं दाणं । सुविहियपासे वयनिसेहो १ ॥ जिणभवणबिंबपूया—करणं कारावणं जइणंपि ॥ आगमपरंमुहेहिं । मूढेहिं परूविओ मग्गो ॥ २ ॥ युग्मं ॥ व्याख्या—जिनभवनेऽर्हन्मंदिरे, उत्तरपदस्थ-

स्यापिशब्दस्येह संबंधाद्यतेरपि त्रिधा नियमितसकलसावद्यव्यापारस्य साधोरपि, न केवलं गृहिणो-
ऽधिकारः, तन्निवासनत्कर्मद्रव्यादिचिंतकत्वलक्षण आगमपराङ्मुखैर्मूढैः प्ररूपितो मार्ग इति द्वितीय-
गाथांते संबंध, एवं सर्वत्र, गृहिणोऽपि सर्वारंभगाजो गृहस्था अपि, न केवलं साधवः, किं? गब्ठ-
प्रतिबद्धा विवक्षिताचार्यसंतानवशवर्तिनः, यथातथा येन तेन कृतक्रीताहृतादिदोषवतापि प्रकारेण
पात्रापात्राविचारणेन वा देयं दातव्यं दानं पिंडवस्त्रपात्रादि यतिभ्य इति गम्यं. सुष्टु लोकागमा-
बाधितं विहितमनुष्ठान येषां ते सुविहिता सुमावस्तेषां पार्श्वंतिके व्रतनिषेधश्चाखिलप्रतिपत्तिप्रतिबं-
धः, ते हि चैत्यनिवासात्तद्द्रव्यादिप्रभुत्वसामर्थ्येन राजवदाक्रम्य सहृदयमपि लोकं मुक्तमर्यादा य-
थाभिरुचितं व्यापारयंति, मुग्धजनप्रत्ययार्थं वदंति च—

जा जस्स ठिइ जा जस्स । संतइ पुव्वपुरिसकयमेरा ॥ सो तं अइक्कमंतो । अणंतसंसारिओ होइ
॥१॥ व्याख्या —या यस्य साधोः स्थितिः प्रव्रजनकाले उपस्थापनकाले वा, आचार्योपाध्यायादि-
व्यवस्थाबंध इत्यर्थः. तथा या यस्य संततिः संतानो वैरशाखाचांद्रकुलादिः, तथा पूर्वपुरुषैश्चिरंतनगी-
तार्थैः कृता विहिता या, यस्येत्यत्रापि संबंधः, मेरत्ति मर्यादा द्रव्यक्षेत्रकालभावपुरुषप्रतिषेधरूपा, सं-

हनधृत्याद्यपेक्षः कारणतः सूत्रातिरिक्तो जीतकल्पादिर्व्यवहारः, स तां रागादिकलुषिततया आतिश्रामन्ननंतसंसारिको भवत्येव, तां च संयतव्यवस्थां सर्वारंभप्रवृत्ते गृहस्थेऽपि मूढाः संबंधयंतीति कृतं प्रपंचेन, प्रकृतं प्रस्तुमः ॥ २ ॥ तथा जिनानां भवनं च गृहं बिंबं च प्रतिमा पूजा चार्चा जिनभवनबिंबपूजास्तासां करणं स्वयं स्वद्रव्येण परद्रव्येण वा निवर्तनं कारणं श्रुतत्वादेतासामेवान्यैर्विधापनं यतीनामपि, न केवलं गृहिणां, आगमपराङ्मुखैः सिद्धांतप्रतिकूलैर्मूढैर्विषयकषायाकुलितमनोवृत्तिभिः प्ररूपितः प्रतिपादितो मार्गः स्वबुद्ध्या धर्मपथ इति गाथाद्वयार्थः ॥ ३ ॥ अथ कथमागमपराङ्मुखं प्ररूपितत्वमस्येत्युच्यते—

॥ मूलम् ॥—समणाणं को सारो । छज्जीवनिकायसंजमो एयं ॥ वयणं भुवणगुरूणं । निहोम्मियं पयडरूवंति ॥ ४ ॥ व्याख्या—श्राम्यंति तपस्यंतीति श्रमणाः साधवस्तेषां किं सारं किं प्रधानं रहस्यमिति यावदित्याह—षड्जीवनिकायसंयमः, षट् च पृथिव्यप्तेजोवायुवनस्पतित्रसलक्षणास्ते जीवनिकायाश्च तेषां संयमो रक्षा, एतदिति प्रत्यक्षपरामर्शे वचनं समयरूपं भुवनगुरूणामर्हतां निहोम्मितमधःकृतं, प्रकटरूपमपि स्पष्टस्वभावमप्ययमर्थः. ते हि सर्वप्रकारैर्जिनमंदिरव्यापारमनुति-

छंतोऽनेषणीयं भक्तपानादि च गृह्णंतो गृहस्थांश्च मऽब्बीया एते इति ममीकुर्वंतोऽन्यदपि ज्योतिषनिमित्तमंत्रतंत्रादि प्रयुंजानाः षड्जीवनिकायमुपमृद्नंतः कथं भगवद्वचो नाधःकुर्वंतीति गाथार्थः ॥ ॥ ४ ॥ अथ सुग्रहीतनामधेयैरार्यरक्षितैरनुज्ञातत्वाच्चैत्यनिवासस्य कथमागमपराङ्मुखप्ररूपितोऽयमभिधीयत इत्येतदनूद्य समाधिमाह—

॥ मूलम् ॥—मन्नंति चेइयं अज्ज—रक्खिएहिं मणुनायमिह केइ ॥ ताणमयं मयबज्झं । जम्हा नो आगमे भणियं ॥ ५ ॥ व्याख्या—मन्यंते अभ्युपगच्छंति केचिदाचार्याभासा इति संबंधः, किं तत्? चैत्यमार्यरक्षितैरनुज्ञातमिति वाक्यं कर्म, क? इह यतिजनविषये निवासायेति प्रक्रमः, तेषामेव वादिनां मतमभ्युपगमो मताज्जिनशासनाद्बाह्यं बहिर्भूतं, यस्माद्धेतोरागमे सिद्धांते न भणितं चैत्यनिवासानुज्ञानमिति प्राकृतमिति गाथार्थः ॥ ५ ॥ तर्हि किं भणितमित्याह—

॥ मूलम् ॥—एयं भणियं समए । इंदेणं साहूजाणणनिमित्तं ॥ जक्खगुहाए दारं । अण्णमुहं ठवियं तइया ॥ ६ ॥ व्याख्या—एतदभिधास्यमानं भणितमुक्तं समये आवश्यकनिर्युक्तिचूर्ण्यादिरूपे, किं? इंद्रेण सौधर्माधिपेन साधूनामार्यरक्षितशिष्याणां ज्ञापननिमित्तं यक्षगुहाया व्यंतर-

निवासरूपाया द्वारं मुखमन्यस्यां दिशि मुखं स्थापितं विहितं, न पुनश्चैत्यस्य, तदा तस्मिन् काले यदा तैस्तस्यां वसतिः कृतेति गाथार्थः ॥ ६ ॥ माभूत्तेषामनुज्ञा परं आधाकर्मादिदोषरहिते तत्र निवसतां का क्षतिरित्याह—

॥ मूलम् ॥—डुग्गंधमलीणवत्थस्स । खेलसिंघाणजल्लजुत्तस्स ॥ जिणजवणे णो कप्पइ । जइणो आसायणाहेऊ ॥ ७ ॥ व्याख्या—दुर्गंधान्यस्नानशरीरमलसंपर्कात् मलिनानि बाह्यरजःसंगाद्वस्त्राणि यस्य स तथा तस्य, खेलश्च निष्ठीवनं, सिंघानश्च नाशिकामलः, जल्लश्च देहमल उपलक्षणत्वादन्येऽपि तथाविधा वातनिसर्गादयो मनुष्यशरीरधर्मा अवरुध्यंते तैर्युक्तो यः स तथा तस्य यतेर्जिनभवने न कल्पते स्थातुमिति गम्यं, कुतः? आशातनाहेतोराशातनालक्षणात्कारणात, उक्तं च—डुब्भिगंधमलस्सावि । तणुरप्पेसण्हाणि या ॥ दुहउ वाहावावि । तेण ठंति न चेइए ॥ ॥ १ ॥ जइवि न आहाकम्मं । भत्तिकयं तह विवज्जयंतेहिं ॥ भत्ति खलु होइ कय—इहारासायणा परमा ॥ २ ॥ आसायणमिछत्तं । आसायणवज्जणाइ सम्मत्तं ॥ आसायणानिमित्तं । कुवइ दीहं च संसारं ॥ ३ ॥ न च वाच्यं भावार्हतां समीपे साधूनामवस्थानात्, स्थापनार्हत्समीपावस्था-

नमपि न विरुध्यते, यस्मादन्य एव भावार्हतां कल्पोऽन्य एव स्थापनार्हतां, तथाहि—भावार्हतां सर्वसंवररूपदीक्षांगीकारात सर्वमेव तत्कृत्यं यतिभिरेव कार्यं, न गृहस्थैः, विरतिविराधनासंभवात म ज्जनमाल्यारोपादि च सावद्यं तेषां न विधीयते, तदुद्देशेन पाकादि च न किंचित्क्रियते. स्थापनार्हतां तु गृहस्था एव सर्वमनुतिष्ठंति. स्नपनादि च सर्वं विधीयते इति न तेषां सर्वसाम्यबुद्ध्या चैत्येऽवस्थातव्यमिति गाथार्थः ॥ ७ ॥ इदमुत्पथमुन्मथ्य प्रस्तुतमार्गं प्ररूपयन्नाह—

॥ मूलम् ॥—भावच्चयदव्वच्चय—रूवो सिवपंथसत्थवाहेण ॥ सव्वन्नूणा पणीओ । दुविहो मग्गो सिवपुरस्स ॥ ८ ॥ व्याख्या—भाव परमार्थ शुभाध्यवसायो वा, तेन तद्रूपो वा स्तवः स्तोतव्यपूजनमाराधनमिति हृदयं, भावस्तवः. द्रव्येण द्रव्यरूपो वा, भावस्तवकारणभूतः स्तवः भागवत द्रव्यस्तवः, अनयोर्द्वंद्वः. ततस्तौ रूपं स्वभावो यस्य स तथा. शिवस्य मोक्षस्य महापुरस्य वा पंथा मार्गस्तस्मिन् सार्थवाह इव सार्थवाहस्तेन शिवपथसार्थवाहेन, तस्य स्वरूपमाह—सर्वज्ञेन सर्वविदा, तदन्यप्रणयने विसंवाददर्शनात्, प्रणीतः प्ररूपितो द्विविधो द्वौ विधौ भणितस्वरूपौ प्रकारौ यस्य स तथा, मृग्यते परमसुखाभिलाषिभिरन्विष्यते, मृज्यते वा कर्ममलापनयनाद्विशोध्यतेऽनेनात्मेति मार्गः शिव

शिवपुरस्य मोक्षनगरस्य, अयमाशयः—यत्प्रयोजननिष्पत्तौ भावस्यैवालंबनं मरुदेवास्वामिनीवत्, यच्च विदिततत्वस्य अविदिततत्वस्य वा भावेन क्रियासु प्रवर्तनं वैरस्वामिमापतुषादिवत्, स द्विविधोऽपि भावस्तवमार्गः, तथा यद् द्रव्यत एवांतःकरणशून्यतया गोविंदवाचकादिवत्सदनुष्ठानं, यच्च द्रव्येण भरतादिवज्जिनभवनादिकरणं, स द्विविधोऽपि द्रव्यस्तवमार्ग इति गाथार्थः ॥ ८ ॥ अथ भावस्तवद्रव्यस्तवयोः स्वयमेव स्वरूपमाह—

॥ मूलम् ॥—जावज्जीवं आगम—विहिणा चारित्तपालणं पढमो ॥ नायज्जियदव्वेणं । बीउं जिणभवणकरणाइं ॥ ९ ॥ व्याख्या—यावज्जीवं यावत्प्राणधारणं, न परपरिकल्पितद्वादशवर्षादिकालावधिनेत्यर्थः. आगमो गणधरादिरचिता शास्त्रपद्धतिस्तस्य विधिस्तेन सूत्रोक्तन्यायेनेत्यर्थः, अनेन स्वरुचिरचितानुष्ठानस्य निष्फलत्वमावेदयति. चारित्रं मूलोत्तरगुणानुरूपं तस्य पालनं रक्षणं सम्यग्विधानमिति यावत्, प्रथम आद्यो भावस्तवो भवतीति क्रिया. न्यायः स्वामिद्रोहविश्वसितवंचनचौर्यादिगर्ह्यार्थोपार्जनोपायभूतः स्वस्ववर्णानुरूपः सदाचारस्तेनार्जितं यद् द्रव्यं तेन न्यायार्जितधनेन जिनभवनादिकरणमेव श्रेयस्करं, न चान्यायार्जितेन धनेन जिनभवनादिकरणं मार्गानुयायी-

ति सूचयति. एवं जिनभवनकरणादिरूपो द्वितीय द्रव्यस्तवः. इह च यद्भाव यथाभवन द्रव्यत एव क्रियासु प्रवर्तनं द्रव्यस्तवश्च, तयोरभिधानं तुल्यत्वादिति-गाथार्थः ॥ ए ॥ अथ जिनभवनकरणादिरिति पदं विवृणोति—

॥ मूलम् ॥—जिणभवणबिंबठावण—जत्तापूयाइ सुत्तओ विहिणा ॥ दवथयत्ति नेयं । भावथयकारणत्तेण ॥ १० ॥ व्याख्या—जिनस्यार्हतो भवनं च गृहं, बिंबं च प्रतिमा, स्थापनं च प्रतिष्ठा. बिंबस्यैव शोभनदिने प्रथमपूजा. यात्रा च रथनिर्गमादिरूपा अष्टाह्निकादिका च, पूजा च पुष्पाद्यर्चनं, आदिर्यस्य जिनगुणगाननर्तनवाद्यवादनादेः, तज्जिनभवनबिंबस्थापनायात्रापूजादिद्रव्यस्तव इति ज्ञेयमिति योगः, तच्च न यथाकथंचिदित्याह—सूत्रत आगममाश्रित्य, तदपि विधिना 'जहरेहइ तह सम्मं' इत्यादिना विधानेन द्रव्यस्तवो भावस्तवकारणभूत इति ज्ञेयं. केन हेतुनेत्याह—भावस्तवकारणत्वेन चरणप्रतिपत्तिरूपभावस्तवहेतुत्वादिति गाथार्थः ॥ १० ॥ इह च कांश्चित् साध्वाभासान् द्रव्यस्तवेऽपि प्रवर्तमानानुपलभ्य कस्यचिदधिकारिशंका मा भूदिति द्रव्यस्तवस्य सावद्यत्वमाविर्भावयन् यतेरनधिकारितामाह—

॥ मूलम् ॥—छहं जीवनिकायाणं । संजमो जेण पावए भंगं ॥ तो जइणो जगगुरुणो । पुप्फाईयं न इछंति ॥ ११ ॥ व्याख्या—षण्णां जीवनिकायानां संयमस्त्रिधा व्रतविरतिर्येन कारणेन प्राप्नोति लभते भंगं भ्रंशं, 'तोत्ति' ततो हेतोर्यतेरनगारस्य जगद्गुरवस्तीर्थकृतो नेछंति नानुजानंति पुष्पाण्यादिर्यस्मिंस्तत्पुष्पादिकमर्चनं, यदिवा पुष्पादिकं पूजार्थं हस्तेन गृहीतुमिति शेषः, सकलद्रव्यस्तवोपलक्षणं चेदं, उक्तं च—छज्जीवकायसंजमो । दवछविसोविरुझई कसिणो ॥ तो कसिणसंजमविऊ । पुप्फाईयं न इछंति ॥ १ ॥ इति गाथार्थः ॥ ११ ॥ ननु सर्वसंवररूपसंयमवतापि दर्शनशुद्धिर्विधेया, सा च तीर्थकृत्पूजातो विशेषतः संभवति, तत्कथमसौ निषिध्यते? अत आह—

॥ मूलम् ॥—तं नहि भुवणमझे । पूयाकम्मं न जं कयं तस्स ॥ जेणेह परमआणा । न खंडिया परमदेवस्स ॥ १२ ॥ व्याख्या—पूर्वार्धं सुगमं, न वरमग्रे येनेति प्रयोगात्तेनेति संबध्यते, येन किं? येनेह भावस्तवविचारणायां परमा चासावाज्ञा च मनोवाक्कायशुद्ध्या सकलसत्वसंरक्षणपरा परमाज्ञा निरुपमशिवसुखसाधकत्वान्न खंडिता नोल्लंघिता परमदेवस्य देवाधिदेवस्य तीर्थकृतः, इदमैदंपर्यं—यद्यपि साधुः पुष्पपूजादौ न प्रवर्तते तथापि सर्वप्रतिपत्तिमूलसर्वज्ञाज्ञापालनात् पूजादि-

विषये च देशनाद्वारेणोचितोपदेशादनुमोदनाच्चासौ दर्शनशुद्धिमान् भवत्येवेति गाथार्थः ॥ १२ ॥ तदियता ऽव्यस्तवाद्भावस्तवो गरीयानिति निश्चितं, परमनयोः कियदंतरमित्याह—

॥ मूलम् ॥—मेरुस्स सरिसवस्स य । जित्तियमित्तं तु अंतरं होइ ॥ भावब्बयदव्वब्बयाण । अंतरं तित्तियं नेयं ॥ १३ ॥ व्याख्या—निगदसिद्धा, नवरं 'भावब्बयदव्वब्बयाणंति' बहुवचनं प्राकृतप्रभवमिति ॥ १३ ॥ अथ कुत एतदित्याह—

॥ मूलम् ॥—उक्कोसं दव्वब्बयं । आरोहिय जाइ अच्चुयं जाव ॥ भावब्बएण पावइ । अंतमुहुत्तेण निव्वाणं ॥ १४ ॥ व्याख्या—प्रतीतार्था, नवरमपेर्गम्यमानत्वादुत्कर्षमपि, तत्रोत्कर्षस्तं, पर्यंतसंलेखनासंपन्ननिरतिचारद्वादशव्रतपरिपालनलक्षणं, उक्तं चात्र—उववाओ सावगाण । उक्कोसेण अच्चुयं जाव ॥ तथा 'अंतमुहुत्तेणत्ति' मरुदेवास्वामिनीवदचिंत्यशक्तित्वाद्भावस्तवस्येति गाथार्थः ॥ १४ ॥ एवं च सति—

॥ मूलम् ॥—मोत्तूणं भावब्बयं । जो दव्वब्बए पवट्टए मूढो ॥ सो साहूवत्तब्बो । गोयम अजओ अविरओ य ॥ १५ ॥ व्याख्या—सुगमैव, केवलं मूढः कृत्याकृत्यविवेकविकल, गौतम इति

भगवान् वर्धमानस्वामी गौतमसगोत्रमिंद्रभूतिमामंत्रयते, अनेन चैतन्महानिशीथसूत्रं सूचयति, तथाहि—भयवं जे भावहयं गहीय दव्वहयं कुज्जा से किमालवेज्जा? गोयमा! असंजएइ वा अविरएइ वा अप्पडिहयपच्चक्खायपावकम्मेइ वा निद्धम्मेइ वा भठपइन्नेइ वा देवचएइ वा देवभोएइ वेत्यादि. अयतः षट्कायविराधनेन संयमभ्रंशादविरतः, श्रावकोऽपि न लिंगधारित्वात्, मार्गद्वयाद्भ्रष्ट इति हृदयमिति गाथार्थः ॥ १५ ॥ मूढ इति यदुक्तं तद् दृष्टांतेन द्रढयन्नाह—

॥ मूलम् ॥—मंसनिवित्तिं काउं । सेवइ दंतिक्कयंतिधणिभेया ॥ इय चइऊणारंभं । परववएसा कुणइ बालो ॥ १६ ॥ व्याख्या—मांसं पिशितं, तस्य निवृत्तिं कृत्वा कश्चिदविवेकात्सेवते तदेव, कथं? 'दंतिक्कमिति' ध्वनिभेदाच्छब्दभेदेन, इय एवं त्यक्त्वा आरंभं, एकग्रहणे तज्जातीयग्रहणात्परिग्रहग्रहणं च परव्यपदेशाद्देवादिव्यपदेशेन करोति यतो बालोऽज्ञ, तदुक्तं—चइऊण य घरवासं । आरंभपरिग्गहेसु वट्टंति ॥ जं सन्नाभेएणं । एयं अविवेगसामत्थं ॥ १ ॥ यतः—पयईए सावज्जं । संतं नणु सव्वहा विरुद्धं तु ॥ धणिभेयम्मिवि महुरग—सीयलगाइव्व लोयम्मि ॥ १ ॥ इति गाथार्थः ॥ १६ ॥ ननु कथमसौ बालः? स हि धर्मार्थितया चैत्यादिचिंतायां प्रवर्तत इति यो

मन्यते तमनुशासितुमाह—

॥ मूलम् ॥—तित्थयरुद्देसेण वि । सिढिलिज्ज न संजमं सुगइमूलं ॥ तित्थयरेणवि जम्हा । समयंमि इमं वणिद्दिठं ॥ १७ ॥ व्याख्या—तीर्थकरोद्देशेनाप्यास्तामन्यथा, न शिथिलयेन्न ह्रासयेत्संयमं चारित्रं सुगतिमूलं प्रधानमपवर्गकारणं, किमिति? यस्मात्तीर्थकरेणापि समये सिद्धांते इदं वक्ष्यमाणमर्थतो विनिर्दिष्टं कथितमिति गाथार्थः ॥ १७ ॥ तदेवाह—

॥ मूलम् ॥—सव्वरयणमएहिं । विभूसियं जिणहरेहिं महिवलयं ॥ जो कारिज्ज समग्गं । तओवि चरणं महड्ढीयं ॥ १८ ॥ व्याख्या—रत्नैरंकादिभिर्निर्वृत्तानि रत्नमयानि, सर्वाणि च सकलानि तानि रत्नमयानि च सर्वरत्नमयानि, यदिवा सर्वरत्नैर्निर्वृत्तानि सर्वरत्नमयानि, दीर्घत्वं प्राकृतत्वात्, एतैर्जिनगृहैर्विभूषितं मंडितं महीवलयं, प्रतिग्रामं प्रतिनगरं च भरतादिपृथ्वीपीठं य. कश्चिदतिशायिसंपद्भक्तिपुण्यप्राग्भारोपेतश्चक्रवर्त्यादिः कारयेत्समग्रं परिपूर्णं, ततोऽपि तस्मादपि सर्वोत्तमद्रव्यस्तवाच्चरणं सर्वविरतिस्वभावं महर्द्धिकं मेरुसर्षपोपमया गरीयः, आह च—कंचणमणिसोवाणं । थंभसहस्सूसियं सुवन्नतलं ॥ जो कारिज्ज जिणहरं । तओवि तवसंजमो अहिओ ॥ १ ॥

अतस्तादृशोऽन्यस्तवाराधका अपि सर्वसंवररूपं भावस्तवमाराध्यैवाभिलषितार्थसाधका भवंति. ननु जिनयात्रामहोत्सवामारिघोषणमहादानादिप्रवृत्तिहेतुकत्वेन प्रवचनप्रभावनाप्रधानत्वाद् ऽन्यस्तव एव महर्द्धिकः, यतः प्रवचनप्रभावनैव दर्शनसर्वस्वं, तदुक्तं—

इदं दर्शनसर्वस्वं । इदं दर्शनजीवितं ॥ सामर्थ्येन यदर्थेन । क्रियते शासनोन्नतिः ॥ १ ॥ इति, अत्रोच्यते—प्रवचनप्रभावनांगान्यपि जिनयात्रादीनि, षट्कायोपमर्दपुरस्सरं विधीयमानानि न तथाविधफलसाधनाय भवंति, षट्कायहितमेव चार्हतः प्रतिपादयंति. उत्कृष्टतप श्रुतचारित्रधारिणश्च परमार्थतः प्रवचनप्रभावकाः, तदुपदेशादेव च जिनशासनोन्नतयः सर्वाः प्रवर्तंते, तस्मादनिपुणमतेरयमभिप्राय इत्युपेक्षणीयः. उक्तं च—दव्वत्थं भावत्थं । दव्वत्थं बहुगुणोत्ति बुद्धिसिया ॥ अनिउणमइवयणमिणं । छज्जीवहियं जिणा बिंति ॥ १ ॥ तस्मात्—अकसिणपवत्तगाणं । विरयाविरयाण एस खलु जुत्तो ॥ संसारपयणुकरणो । दव्वत्थए कूवदिठंतो ॥ १ ॥ इति गाथार्थः ॥ ॥ १८ ॥ यद्येवं कथमागमे क्वचिल्लूताद्यपनयनं साधोरभिहितमित्याह—

॥ मूलम् ॥—अन्नाभावे जयणाए । मग्गनासो हवेज्ज मा तेण ॥ पुव्वकयाययणाइसु । इ-

सिगुणसंभवे इहरा ॥ १९ ॥ व्याख्या—अन्यस्य श्रावकस्य वा भद्रकादेरभावे मार्गनाशस्तीर्थोच्छेदो माभूत्तेन कारणेन पूर्वकृतायतनादिषु चिरंतनजिनभवनेषु. आदिशब्दाद् बिंबेषु ईषद्गुणसंभवे च कस्यचिज्जिनधर्मप्रतिपत्त्यादिस्तोकगुणसंभवे च यतनया षट्कायोपमर्दविरहात्मिकया परैरदृश्यमानस्वरूपया च लूताद्यपनयनादिकं विधेयमिति शेषः. यदुक्तं—

सीलेह मंखफलए । इयरे चोयंति तंतुमाईसु ॥ अभिजोयंति सवित्तिसु । अणिच्छफेस्संतदीसंता ॥ १ ॥ व्याख्या—इतरे चैत्यवासिनस्तान् साधवः प्रेरयंति तंत्वादिषु लूतापनयनादिषु विषये, कथं? शीलयत सज्जयत मंखफलकान्याजीविकाहेतुत्वसाम्याज्जिनबिंबानि, इत्येवं स्ववृत्तिषु स्वाजीविकास्वभियोजयंति. यदा तु ते नेच्छंति तदा परैरदृश्यमानाः स्वयमप्यपनयंति लूतादीनि. ॥ १९ ॥ इतरथा पूर्वोक्तविपर्यये पुनः किमित्याह—

॥ मूलम् ॥—चेइयकुलगणसंघे । आयरियाणं च पवयणसुए य ॥ सव्वेसुवि तेण कयं । तवसंजमउज्जमंतेण ॥ २० ॥ व्याख्या—चैत्यकुलगणसंघेषु तथाचार्याणां च, तथा प्रवचनश्रुतयोश्च, किं? सर्वेष्वपि तेन कृतं कृत्यमिति गम्यते, केनेत्याह—तपःसंयमयोरुद्यच्छता साधुनेति, तत्र

चैत्यान्यर्हत्प्रतिमाः, कुलं चांद्रादि, गणः कुलसमुदायः, संघः समस्त एव साध्वादिसंघातः, आचार्याः प्रतीताः, चशब्दादुपाध्यायपरिग्रहः, भेदाभिधानं च प्राधान्यख्यापनार्थं, प्रवचनमर्थः, श्रुतं सूत्रमेव, चशब्दः स्वगतानेकभेदसूचकः. एतेषु सर्वेष्वपि स्थानेषु तेन कृतं कृत्यं यस्तपःसंयमोद्यमवान् वर्तते. इयमत्र भावना—अयं हि नियमाद् ज्ञानदर्शनसंपन्नो भवति, अयमेव च गुरुलाघवमालोच्य चैत्यादिकृत्येष्वपि सम्यक् प्रवर्तते, यथैहिकामुष्मिकगुणवृद्धिर्भवति, विपरीतस्तु कृत्येऽपि प्रवर्तमानोऽविवेकादकृत्यमेव संपादयतीति गाथार्थः ॥ २० ॥ अथ शठजनप्ररूपणामुक्तीर्य निराकुरुते—

॥ मूलम् ॥—केइ भणंति भण्णइ । सुहुमविचारो न सावगाण पुरो ॥ तं न जओ अंगाइसु । सुव्वइ तव्वण्णणा एवं ॥ २१ ॥ व्याख्या—केचिद्भवाभिनंदिनो भणंति प्रतिपादयंति, किमित्याह—न भण्यते न कथ्यते सूक्ष्मविचारो द्रव्यस्तवभावस्तवाधिकारविवरणादिरूपः, कथं पुरोऽग्रतः, केषां? श्रावकाणां, ते हि विदितसकलसमाचाराः कलिकालबलावलुप्तशक्तिकं प्रमादपरवशं यतिजनमवलोक्य मंदधर्माणो भाजूवन्निति, तदेतन्न, यतोंगादिष्वंगोपांगादिषु श्रूयते तेषां श्रावकाणां वर्णना गुणोत्कीर्तनं स्वरूपकथनमिति यावदेवं वक्ष्यमाणप्रकारेणेति गाथार्थः ॥ २१ ॥ तथाहि—

॥ मूलम् ॥—लद्धट्ठा गहियट्ठा य । पुच्छियट्ठा विणिच्छियट्ठा य ॥ अहिगयजीवाइया । अचालणिज्जा पवयणाउ ॥ २२ ॥ तह अट्ठि अट्ठिमज्जा—णुरायरत्ता जिणिंदपण्णत्तो ॥ एसो धम्मो अट्ठो । परमट्ठो सेसगमणट्ठो ॥ २३ ॥ सुत्ते अत्थे कुसला । उस्सग्गववाईए तहा कुसला ॥ ववहारभावकुसला । पवयणकुसला य छट्ठाणा ॥ २४ ॥ व्याख्या—तत्र लब्धार्था निरंतरश्रवणतो, गृहीतार्थाः सम्यगवधारणातः, प्रश्नितार्थाः क्वचित्संशये सति विनिश्चितार्था ऐदंपर्यार्थोपलंभात्, चकारो विशेषणसमुच्चये.

अधिगताः स्वस्वरूपेण विदिता जीवादयः, आदिशब्दादजीवपुण्यपापाश्रवसंवरादयो दंभकोक्ताः पदार्था यैस्ते तथा, अत एव अचालनीयाः क्षोभयितुमशक्याः प्रवचनाज्जैनेंद्रशासनात् ॥२२॥ तथास्थीनि चास्थिमज्जानि च तद्रूपाणि, अनुरागेण प्रस्तावाज्जिनमतप्रेम्णा रक्तानीव रक्तानि वासनासाधर्म्यात्, अस्थ्यस्थिमज्जान्यनुरागरक्तानि येषां ते तथा, क्तांतस्येह परनिपातेऽभिधानात, कथमित्याह—एष साक्षान्निषेव्यमाणो जिनप्रज्ञप्तो धर्मोऽर्थो वस्तुरूपतयोपादेयः, परमार्थस्तत्वभूतः परमगतिहेतुत्वात्, शेषकः शिवशाक्यकपिलादिप्रणीतो, विभक्तिलोपो मकारश्चेह प्राकृतत्वात्,

अनर्थोऽवस्तुरूपः, तदियता भगवत्यंगाद्युक्तदंडकोऽर्थतः संसूचितः, स चायं—अहिगयजीवाजीवा उवलद्धपुन्नपावासवसंवरनिज्जरकिरिया अहिगरणबंधप्पमुक्खकुसला असहिज्जा देवासुरनागसुवन्नजक्खरक्खसकिन्नरकिंपुरिसगरुलगंधव्वमहोरगाइयेहिं देवगणेहिं निग्गंथाउ पावयणाउ अणतिक्कमणिज्जा निग्गंथे पावयणे निस्संकिया निक्कंखिया निव्वितिगिच्छा लद्धठा गहियठा पुच्छियठा अहिगयठा विणिच्छियठा अट्ठिमिंजपेमाणुरागरत्ता अयमाउसो निग्गंथे पावयणे अयं परमठे सेसे अणठे ऊसियफलिहअवंगुयदुवाराचियत्तंतेउरघरप्पवासा बहुहिं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासेहिं चाउद्दसट्ठमुदिट्ठपुन्निमासिणीसु पडिपुन्नं पोसहं सम्मं अणुपालेमाणा समणे निग्गंथे फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबलपायपुंछणेणं पीढफलगसेज्जासंथारएणं पडिलाभेमाणा अहापडिग्गहिएहिं तवोकम्मेहिं अप्पाणं भावेमाणा विहरंतित्ति ॥ २३ ॥

तथा कुशलशब्दस्योभयत्रापि संबंधात् पदवाक्यादिविच्छेदप्रधानोदात्तादिघोषविशुद्धास्खलितत्वादिगुणोपेतसूत्रोच्चारणपरिज्ञानात् सूत्रे कुशलाः, सुगुरुसंप्रदायतः स्वसमयपरसमयनिश्चयव्यवहारनयादिविभागेन सूत्राभिधेयस्थापनादर्थे कुशलाः, सामान्योक्तोविधिरपवादः, यथा पुढवाइसु आसेव-

त्यादि वक्ष्यमाणं, ततश्च तयोर्भवमौत्सर्गापवादिकं कार्यमिति शेष, तत्र तथापरिज्ञानप्रकारेण कुशला. व्यवहारश्चतुर्धा धर्मार्थकामलोकभेदात्, तत्र धर्मे यद्देवनाविवविक्रयेण न जीवति, देवद्रव्यं च स्वर्णादिग्रहणकमंतरेण न वर्धयति, नात्मनाप्यंगोद्धारकेण गृह्णाति न च देवद्रव्याधिगत्वेनाधमर्णान् शरीरेण शकटबलीवर्दादिना वा वेष्ट्यादि कारयति. अर्थेऽवंध्यफलदायकनिरवद्यक्रयाणकसंग्रहः. कामे गृहमेधिन्या मार्दवेनानुवर्तनं, सदा हृदयानर्पणं च. लोके राजकुलगमनतद्धिरुद्धवर्जनप्रधानसंसर्गजन्मश्रुतजात्यावृद्धसेवनादिः.

एवंविधे व्यवहारे कुशला दक्षाः भावकुशला, बाह्यांतरचेष्टाभिरभिप्रायपरिज्ञानपूर्वमभिनवधर्माणां स्थिरीविधायिनः, लोकेऽपि पराभिप्रायकौशल्यादात्मपरानाबाधया सर्वत्र प्रवृत्तिकारिणः, इतिशब्दाध्याहारादित्येवं षट्स्थानात्, षण्णां स्थानानां समाहारः षट्स्थानं, तदाश्रित्य ल्यब्लोपे पंचमी, प्रवचनकुशला भवंति. च प्राग्वर्णनापेक्षया समुच्चये, अनेन च प्रवचनकुशला भवंति. चः प्राग्वर्णनापेक्षया समुच्चये, अनेन च प्रवचनकौशल्येन कृतव्रतपरिकर्मतादीन्यपराण्यपि पंच पदान्युपलक्ष्यंते, तथा चाह—कयवयकम्मपभावो । सीलत्तं चेव तहय गुणवत्तं ॥ रिजुमयववहरणं चिय ।

गुरुसुस्सूसा य बोधव्वा ॥ १ ॥ पवयणकोसल्लं पुण । बहुं नाणं तु होइ णायव्वं ॥ ब्बहाणगुणेहिं जुत्तं । ऊकोसो सावगो होइ ॥ २ ॥ एतद्व्याख्या तु षट्स्थानकादवसेया, तदेवमुपासकानां सूक्ष्मार्थविचारनिपुणतायाः सूत्रेऽभिधानात सूक्ष्मविचारस्तेषां न कथ्यत इति यडुक्तं तदपास्तमिति गाथाद्वयार्थः ॥ २४ ॥ एवं च सति ये सिद्धांततत्वमपह्नुत्योन्मार्गमुपदिशंति सुसाधुनिंदां च कुर्वंति तेषां विश्वस्तघातित्वमाह—

॥ मूलम् ॥—पुच्छंताणं धम्मं । तंपि य न परिक्खिउं समच्छाणं ॥ आहारमित्तलुद्धा । जे उम्मग्गं उवइसंति ॥ २५ ॥ सुगइ हणंति तेसिं । धम्मियजणणिंदणं करेमाणा ॥ आहारपसंसासु य । पायंति जणं डुग्गइं बहुयं ॥ २६ ॥ व्याख्या—पृच्छतां धर्मं गृहियतिभेदभिन्नं, तमपि च कथ्यमानं धर्मं परीक्षितुं विवेक्तुमसमर्थानां मुग्धबुद्धित्वात्, अनने तेषामत्यंतानुकंपनीयतामाह, भव्यप्राणिनामिति गम्यते, आहारोऽशनादिः, उपलक्षणं चैतद्वस्त्रपात्रपूजादीनां, तन्मात्रे सिद्धिसुखविमुखतया लुब्धा गृद्धा ये यथाछंदादय उन्मार्गमुत्पथमशुद्धदानादिरूपमुपदिशंति कथयंति, मा ममैते, विवेकिनः संत आधकर्मादिदोषदूषितमाहारादि न दास्यंतीत्यनेन च तेषामतिक्लिष्टतामाह, यदुच्यते—

जइ सरणमुवगयाणं। जीवाण न किं तईसिरोजाउ ॥ एवं आयरिउवि हु। उस्सुत्तं पन्न-
वंतोत्ति ॥ १ ॥ २५ ॥ यत्तदोर्नित्यसंबंधात्ते किमित्याह—सुगतिं स्वर्गापवर्गादिकां तेषां पृछकानां
घ्नंति बाधंते उन्मार्गस्थापितानां तेषां सुगतिहानेस्तन्मूलत्वात्तथा ते धार्मिकजनस्य कलिकालेऽपि
यथाशक्तियतमानस्य विशुद्धाहारवस्त्रपात्रोपाश्रयग्राहिणो निंदनं हीलनं कुर्वाणा यथैते बकवृत्तयो
विप्रतारका देयग्राहकादिशुद्धिव्याजेन साधूनां दानं च निवारयंति, अतो नैतद्वच श्रोतव्यमिति.
आहाराय प्रशंसा आहारप्रशंसाः कलिकालकल्पद्रुमा पुरुषा नवंतो नवदीयमाने नैवं तीर्थं
प्रवर्तते, एषणीयानेषणीयविचारणं च कार्पण्यलक्षणमित्येवंलक्षणा आहारदानमेवोत्तरमित्यादिरूपा
वा, तान्निः, सप्तमी चेयं तृतीयार्थे, चः पूर्वोक्तसमुच्चये, नयंति प्रापयंति दुर्गतिं नैरयिकयादिकां ज-
नं लोकं बहुकं प्रभूतमिति गाथाद्वयार्थः ॥ २६ ॥ अधुना यः शरीरसामर्थ्यादिविरहात् क्रियाशिथि-
लो मानाकुशुद्धचित्ततया परलोकाभिमुखश्च, तस्योपदेशमाह—

॥ मूलम् ॥—हुज्ज हु वसणप्पत्तो। सरीरदोब्बल्लयाए असमत्थो ॥ चरणकरणे असुद्धे। सु-
द्धं मग्गं परूवेज्जा ॥ २७ ॥ व्याख्या—हुर्वाक्यालंकारे, भवेत् स्यात् व्यसनप्राप्त आपद्गत इंद्रिया-

र्थीशक्तो वा, वा शब्दाध्याहाराद्वार्धकरोगादिकृतया शरीरदुर्बलतया, लकारस्य द्वित्वं प्राकृतत्वात्, असमर्थो वा स्वाध्यायप्रतिलेखनादिक्रियां कर्तुमशक्तः, ततः किं कुर्यादित्याह—चरणं च व्रतादि, करणं च पिंडविशुद्ध्यादि तस्मिन्नशुद्धेऽभिहितनीत्या अतिचारमलकलुषिते आत्मानं निंदन् शुद्धं यथास्थितं मार्गं ज्ञानादिरूपं प्ररूपयेदुपदिशेत, स हि सिद्धांतानुरागादात्मानं निंदन् मार्गानुपाती भवति. उक्तं च—उसन्नोवि विहारे। कम्मं सिढिलेइ सुलहबोहीउ ॥ चरणकरणं विसुद्धं । उववूहंतो परूवंतो ॥ १ ॥ इति-गाथार्थः ॥ २७ ॥ एतद्विपर्यये दोषमाह—

॥ मूलम् ॥—परिवारपूयहेउं । पासत्थाणं च आणुवित्तीए ॥ जो न कहेइ विसुद्धं । तं दुल्लहबोहियं जाण ॥ २८ ॥ व्याख्या—परिवारश्च परिच्छदः साध्वादिः, पूजा च वस्त्रपात्रादिभिः सत्कारः, तयोर्हेतुं निमित्तं, ह्रस्वत्वं प्राकृतत्वात्. पार्श्वे ज्ञानादीनां समीपे तिष्ठंतीति पार्श्वस्थास्तेषां, उपलक्षणं चैतदवसन्नादीनां, अनुवृत्त्या तच्चित्तावर्जनार्थं, चकाराल्लोकयात्राद्यर्थं च, यः कश्चिल्लुब्धो न कथयति न प्ररूपयति विशुद्धं मार्गमिति गम्यं, इदमत्र हृदयं—मनाक् शुद्धात्मापि यः शिथिलपरिवारभयाद्ज्ञातैषणीयानैषणीया· श्रावका वा वस्त्रपात्रादिभिर्मे पूजां न विधास्यंति, पार्श्वस्थाद

यो वा कुपिताः संतो ग्रामादेर्निष्कासयिष्यंतीति कृत्वा विशुद्धं न कथयति, तं दुर्लभबोधिकं, बोधिः प्रेत्यजिनधर्मावाप्तिः सा दुर्लभा यस्य सम्यग्मार्गलोपात्, स तथा तमनंतसंसारिकमित्यर्थः, जानीहि बुध्यस्व हे शिष्य इति गाथार्थः ॥ २८ ॥ ननु यद्येवं गरीयान् दोषस्तत्कथमन्यथा कथयंतीत्याह—

॥ मूलम् ॥—मुहमहुरं परिणइ—मंगुलं च गेण्हंति देंति उवएसं ॥ मुहकडुयं परिणइसुंदरं च विरलच्चिय भणंति ॥ २९ ॥ व्याख्या—मुखे प्रारंभे उच्चारणमात्रे मधुरं प्रियः श्रोतृयाह्लिकसमाचारानुकूल इत्यर्थः, तं, परिणतौ परिपाके मंगुलोऽसुंदरो विपाकदारुणत्वात्, चशब्दस्यापिशब्दार्थत्वात्तमप्युपदेशं गृह्णंति श्रोतारो, ददति चाचार्यादयो बहवः. मुखकटुकं श्रवणाप्रियं परिणतिसुंदरमप्युपदेशमितीहापि योगः, विरला एव भणंति प्रस्तुतवद् गृह्णंति च. यदाह—सुलभाः पुरुषा राज—न्नपथ्यप्रियवादिनः ॥ अप्रियस्य तु पथ्यस्य । वक्ता श्रोता च दुर्लभः ॥ १ ॥ इति गाथार्थः ॥ २९ ॥ अथ मुखकटुकपरिणामसुंदरवादिनो वक्तुः परमोपकारितामाह—

॥ मूलम् ॥—भवगिहमज्झंमि । पमायजलणजलियंमि मोहनिद्दाए ॥ उठवइ जो सुयंतं ।

सो तस्स जणो परमबंधू ॥ ३० ॥ व्याख्या—भव एव गृहं जीवावस्थितिसाधर्म्याद्भवगृहं, तस्य मध्यमंतस्तत्र, किं विशिष्टे? प्रमादोऽष्टधा, तद्यथा—अज्ञानं संशयश्चैव । मिथ्याज्ञानं तथैव च ॥ रागो द्वेषोऽनवस्था च । स्मृतेर्धर्मेष्वनादरः ॥ १ ॥ योगदुःप्रणिधानं च । प्रमादोऽष्टविधः स्मृतः ॥ स एव ज्वलनः संतापकत्वेन, तेन ज्वलिते प्रदीप्ते, इह च भवस्थेषु प्राणिष्वपि स्थितः प्रमाद उपचर्यते. मोह एव चैतन्यतिरोधायकत्वान्निद्रा, तया स्वपंतं शयानं जीवमिति गम्यं, उत्थापयति प्रबोधयति यः स जनो गुर्वादिस्तस्य स्वप्तु परमबंधुरात्यंतिकैकांतिकस्वजन इति गाथार्थः ॥ ३० ॥ अधुना प्राक्प्ररूपितं शुद्धप्ररूपकमेवोपबृंहयति—

॥ मूलम् ॥—जइवि हु सकम्मदोसा । मणयं सीयंति चरणकरणेसु ॥ सुद्धप्परूवगा तेण । भावर्ज पूयणिज्जंति ॥ ३१ ॥ व्याख्या—यद्यपि हुरेवकारार्थः, स चांते योक्ष्यते. स्वकर्मदोषान्निबिडचारित्रावरणीयकर्मोदयलक्षणान्मनाक्किंचित्सीदंति मंदायंते चरणकरणयोर्वक्ष्यमाणस्वरूपयोः, तथापीत्यध्याहारः, शुद्धप्ररूपका यथास्थितमार्गप्रदर्शकास्तेनैव शुद्धप्ररूपकत्वलक्षणेन गुणेन भावतो निरुपचारं पूजनीयाः सत्कारार्हाः, इति प्रस्तुतप्रक्रमसमाप्ताविति गाथार्थः, ॥ ३१ ॥ इत्थं मार्गशुद्धौ प्रत-

पादितायां विवेकिनो यत्कुर्वंति तदाह—

॥ मूलम् ॥—एवं जिया आगमदिट्ठिदिट्ठ—सुन्नायमग्गा सुहमग्गलग्गा ॥ गयाणुगामीण जणाण मग्गे । लग्गंति नो गड्डरिगापवाहे ॥ ३२ ॥ व्याख्या—एवमुक्तन्यायाज्जीवा भव्यप्राणिन आगम एव सन्मार्गदर्शकत्वेन दृष्टिर्लोचनं तया दृष्टो विलोकितः सामान्यरूपेण, सुज्ञातो विशेपेणोत्सर्गापवादतो मार्गो यैस्ते तथा शुभमार्गलग्ना सम्यगनुष्ठानाः, न लगंति न गछंति, क? गतानुगामिनां जनानां मार्गे, तत्र गतमेवानुगछंतीति गतानुगामिनः, न तत्वावलोकिनः, तेपां, किंविष्टे मार्गे? गड्डरिकास्तासां प्रवाहो नैरंतर्यश्रेणिगमनं स इव तस्मिन्. यथा हि गड्डरिकायामेकस्यां कापि प्रस्थितायां विचारशून्यमन्यास्तामेवानुव्रजंति, एवं केचिदपरीक्षिततत्वाः प्रवृत्तिप्रधानलोकप्रवृत्तमेव मार्गमनुयांति, विवेकिनस्तु तत्वमेवानुसरंतीति वृत्तार्थः ॥ ३३ ॥ अथ महाजनो येन गतः स पंथा इति न्यायाल्लोकप्रवृत्तिरेव श्रेयसीति ये मन्यंते तान् शिक्षयितुमाह—

॥ मूलम् ॥—नेगंतेणं चिय लोग—नायसारेण इत्र होयवं ॥ वहुमुंडाइव्वयणव्त्तो । आणाइत्तो इह पमाणं ॥ ३४ ॥ व्याख्या—एकांतेनैव नैव कचिल्लोकव्यवहारस्यापि पुरस्करणीयत्वं, यतो

महाजनो येन गतः स पंथेति लोकन्यायसारेण व्यवहारेणैवात्र नैकांतेन भवितव्यं. बहुमुंडादिवचनतो यदि हि लोकप्रवृत्तिरेव बलीयस्यभविष्यत्तदेदमागमवचनमपि नाभविष्यत्, तथाहि—कलहकरा डमरकरा । असमाहिकरा अनेव्वुइकरा य ॥ होहिंति भरहवासे । बहुमुंडे अप्पसमणेया ॥ १ ॥ इत एतस्माद्धेतोः सावधारणत्वादाज्ञैव तीर्थकृदुक्तमेवेह प्रामाण्यविचारे प्रमाणं तत्वमिति गाथार्थः ॥ ३३ ॥ अथ गतानुगतिकपक्षमेवाह—

॥ मूलम् ॥—बहुजणपवित्तिमित्तं । इच्छंतेहिं इह लोइअं चेव ॥ धम्मो न उज्झयव्वो । जेण तहिं बहुजणपवित्ती ३४ ॥ व्याख्या—बहवश्च ते जनाश्च तेषां प्रवृत्तिः स्वरुचिविरचितमनुष्टानं, तदेव बहुजनप्रवृत्तिमात्रमाराधनविराधनविमर्शरहितमित्यर्थः, इच्छद्भिरभिलषद्भिरिह धर्मविचारे, लोकाः, शैवजैनमुनिप्रभृतयस्तेषामयं लौकिकः, स एव धर्मो नोज्झितव्यो न मोक्तव्यो, यतस्तस्मिन् बहुजनस्य राजामात्यादेः प्रवृत्तिः, न चासौ मुच्यते इति तस्मादसंगत एवायं पक्ष इति गाथार्थः ॥ ३४ ॥ एवंस्थिते कृत्यमेह—

॥ मूलम् ॥—ता आणाणुगयं जं । तं चेव बुहेण सेवियव्वं तु ॥ किमिह बहुणा जणेणं ।

हंदि न से अत्थिणो बहुया ॥ ३५ ॥ व्याख्या—यस्मात्कारणान्न बहुजनप्रवृत्तिरालंबनीया तस्मादाज्ञानुगतमागमानुपाति यदनुष्ठानं भवति, तदेव बुधेन विवेकिना सेवितव्यमाचरितव्यं, तुशब्दात्तद्विसंवादि वर्जनीयमित्यर्थः. किं? न किंचिदित्यर्थ, इह धर्मविचारणायां परलोकचिंतायां वा बहुना जनेन, हंदीत्युपप्रदर्शने हेतौ वा, न नैव से तस्यानुगतधर्मस्यार्थिनोऽभिलाषुका श्रेयोऽर्थिनो वा मोक्षकांक्षिणो बहवः प्रभूता., किंत्वल्पा एव संप्रतिकाले, बहवो मुंमा अप्पाश्च श्रमणा इति वचनादिति गाथार्थ. ॥ ३५ ॥ इत्थमनेकधा विधिमार्गसमर्थनमाकर्ण्य महामोहोपहतबुद्धयो यद्वदंति तदाह—

॥ मूलम् ॥—दूसमकाले दुलहो । विहिमग्गो तम्मि चेव कीरंते ॥ जायइ तित्थुच्छेओ । केसिंवि कुग्गहो एसो ॥ ३६ ॥ व्याख्या—दुःषमावसर्पिण्या पंचमोऽरकः, स चासौ कालश्च दुःषमाकालस्तस्मिन् दुर्लभो दुरापः, स्वकीयक्लिष्टकर्मपरिणतेरुन्मार्गप्रवृत्तलोकाद्वा विधिमार्गः शास्त्रानुसारिज्ञानश्रद्धानुष्ठानरूप., तस्मिन्नेव क्रियमाणे, प्राक्तनचेवशब्दस्येहापि संबंधात्तीर्थोच्छेद एव जिनशासनविद्धुसिर्जायते, शास्त्रोक्तानुष्ठानस्य प्रायेण कर्तुमशक्यत्वात्, इतरस्य चामार्गरूपत्वादेष साक्षान्नि-

रूपितः केषांचिदतत्ववेदिनां कुग्रहः कदभिप्राय इति गाथार्थः ॥ ३६ ॥ कुग्रहत्वमेव तेषां प्रकटयति.

॥ मूलम् ॥—जम्हा न मोक्खमग्गे । मुत्तूणं आगमं इह पमाणं ॥ विज्जइ छउमत्थाणं । तम्हा तत्थेव जइयव्वं ॥ ३७ ॥ व्याख्या—सुगमा, केवलं करणाधीनज्ञानिनां स्वर्गापवर्गमार्गादौ प्रत्यक्षादिप्रमाणाविषयत्वेनागमस्यैव प्रामाण्यं, तथाहि—न तावत्तत्र प्रत्यक्षं प्रगल्भतेऽक्षव्यापारागोचरत्वात्, नाप्यनुमानं साध्याविनाभाविनो लिंगस्य कस्यचिदनुपलंभात्, आगमस्त्वाप्तोपज्ञत्वादव्याहतप्रचार एव, ततस्तं विमुच्यान्यथा समाचरतां कुग्रह एवावशिष्यत इति ॥ ३७ ॥ भूयोऽपि कुमार्गसन्मार्गौ भंग्यंतरेणाह—

॥ मूलम् ॥—गिहिलिंगकुलिंगियदव्व—लिंगिणो तिन्नि हुंति भवमग्गा ॥ सुजइसुसावग संविग्ग—पक्खिणो तिन्नि मोक्खपहा ॥ ३८ ॥ व्याख्या—गृहमेव लिंगं येषां ते गृहलिंगा गृहस्था एव, कुत्सितं च संसारकारणत्वात्तल्लिंगं च, तद्विद्यते येषां ते कुलिंगिकाश्चरकादयो, द्रव्यलिंगं भावविकलानां साधुनेपथ्यधरणं तद्विद्यते येषां ते द्रव्यलिंगिनः पार्श्वस्थादयः, आधारे आधेयोपचारात्तदनुष्ठानानि, त्रयस्त्रिसंख्याः किं भवंति? भवमार्गाः संसारपथाः. अथ गृहिलिंगकुलिंगिनौ भव-

ता संसारपथा, र हरणमुखव स्त्रकादिजगवल्लिंगधारिणस्तु कथं ? अत्रोच्यते—सम्यग्ज्ञानादिविकलेन लिंगमात्रेण न किंचित्त्राणं. तथाच—संसारसागरंमि एं । परिग्गमंतेहिं सवजीवेहिं ॥ गहियाणि य मुक्काणि य । अणंतसो दवलिंगाणि ॥ १ ॥ किंच—अन्यलिंगकृतं पापं । जिनलिंगे न शुध्यति ॥ जिनलिंगकृतं पापं । वज्रलेपोपमं मतं ॥ २ ॥ इति. शोभनं सर्वसंवरप्रतिपत्तितः यतते प्रतिलेखनादिसामाचार्यामुद्यच्छतीति सुयतिः सुसाधु. शोभनं श्रद्धानज्ञानवत्तया सुयतिभ्यो जिनवचनं शृणोतीति सुश्रावकः, तथा चोक्तं—संपत्तदंसणाइ । पइदियहं जइजणाउ सुणेई ॥ सामायारिं परमं । जो खलु तं सावगं विंति ॥ १ ॥

संविग्ना मोक्षकांक्षिणः सुसाधवस्तेषां पक्षः परिग्रह. स विद्यते येषां ते संविग्नपक्षिण. पूर्ववत् त्रयो मोक्षमार्गाः, ननु पूर्वं मोक्षमार्गद्वैविध्यमेवोक्तमधुना तु त्रैविध्यमिति कथं न विरोध. ? सत्यं, तृतीयमार्गस्याप्राधान्यत्वादल्पत्वात्कादाचित्कत्वाच्च तत्र न विवक्षा, अत्र तु संसारमार्गत्रैविध्यप्रस्तावात्तद्वर्णनमित्यविरोधः, तल्लक्षणं चैतान्यो गाथान्योऽवसेयं, तथाहि—

जइ न तरसि धारेउं । मूलगुणभरं सउत्तरगुणं च ॥ मोत्तूण तो तिभूमीसु । सावगत्तं वर-

तरागं ॥ १ ॥ अच्चणुरत्तो जो पुण । ( लिंगधारणेऽप्यनुरक्तो मनाक् सशूकश्च ) न मुयइ बहुसो वि पन्नविज्जंतो ( द्रव्यलिंगं ) संविग्गपक्खियत्तं । करेज्ज लब्भिहसि तेण पहं ॥ २ ॥ तथा—संविग्गपक्खियाणं । लक्खणमेयं समासओ भणियं ॥ ओसन्नचरणकरणावि । जेणं सम्मं विसोहेंति ॥ ॥ ३ ॥ सुद्धं सुसाहुधम्मं । कहेइ निंदइ य निययमायारं ॥ सुतवस्सियाण पुरओ । होइ य सव्वो मरायणिओ ॥ ४ ॥ वंदइ न वंदावइ । किइकम्मं कुणइ कारवे ने य ॥ अत्तठा न वि दिक्खइ । देव सुसाहूण बोहेउं ॥ ५ ॥ इति गाथार्थः ॥ ३८ ॥ अथ कथं सुयत्यादयो मोक्षमार्गो भवंत्यपरे च नेत्याह—

॥ मूलम् ॥—सम्मत्तनाणचरणा । मग्गो मोक्खस्स जिणवरुद्दिठो ॥ विवरीओ उम्मग्गो । णायव्वो बुद्धिमंतेहिं ॥ ३९ ॥ व्याख्या—सम्यक्त्वज्ञानचरणानि, पुंस्त्वं प्राकृतभवं, मार्गो मोक्षस्य जिनवरादिष्ट· सर्वविदाख्यातोऽनेन मार्गस्याविसंवादित्वमाह, तानि च सर्वथात्वैव सुयत्यादिषु, न गृहिलिंगादिष्विति. विपरीतो मिथ्यात्वज्ञानाविरतिस्वरूप उन्मार्ग उत्पथो ज्ञातव्यो बुद्धिमद्भिरिति गाथार्थः ॥ ३९ ॥ ज्ञानादीनामेव स्वरूपमाह—

॥ मूलम् ॥—सन्नाणं वत्थुगउ । बोहो सद्दंसणं च तत्तरुई ॥ सच्चरणमणुठाणं । विहिपडि-सेहाणुगं तत्थ ॥ ४० ॥ व्याख्या—वस्तूनि जीवादयः पदार्थास्तेषु गतः स्थितो वस्त्वनुरूपः संशयविपर्ययरहित इत्यर्थः, बोध. संवित्. किमित्याह—तत्सम्यग्ज्ञानं सद्ज्ञानमुच्यते इति शेषः. तथा तत्वेषु जिनप्रज्ञप्तेषु रुचिरभिलाषः, किं? सद्दर्शनं सम्यक्त्वमित्यर्थः. तथानुष्ठानं क्रियाकलापः, किंविशिष्टं? विधिप्रतिषेधानुगं, तत्र विध्यनुगतमुपादेयेषु, प्रतिषेधानुगं हेयेषु, किं? सच्चरणं शोभनचारित्रं. तत्रेति व्याख्यात्रमार्थ इति गाथार्थः ॥ ४० ॥ सच्चरणमनुष्ठानमित्युक्तमधुना सुयतिसुश्रावकविषयितया तदेव दर्शयन्नाह—

॥ मूलम् ॥—जीव म वहहु म अलियं जंपहु । म अप्पं अप्पहु कंदप्पहु ॥ म हरहु म करहु परिग्गहु । एहु मग्गु सग्गहु अपवग्गहु ॥ ४१ ॥ पूया जिणंदेसु रई वएसु । जुत्तो य समाइयपोसहेसु ॥ दाणं सुपत्ते सवणं सुनिट्ठे । सुसाहुसेवा सिवलोयमग्गा ॥ ४२ ॥ व्याख्या—आद्यं वंदनकं नाम छंदः सुगमं, नवरमनेन प्राणिवधविरमणादीनि पंचमहाव्रतान्युक्तानि, व्यतिक्रमभणनं तु ह्यननुलोम्यादिति ॥ ४१ ॥ तथा पूजा पूर्वोक्तशब्दार्थो जिनेंद्रेष्वनेनानन्यसामान्यतीर्थकृद्भक्तिनः

सम्यक्त्वशुद्धिरावेदिता. रतिरासक्तिस्तद्विषयवि[illegible]ागविचारणानुष्ठानसुशीलतेति यावत्, व्रतेषु स्थूल-प्राणातिपातविरमणादिषु द्वादशसु, यतनश्च सामायिकपौषधयोः, अनयोश्च व्रतांतर्गतत्वेऽपि पृथगुपादानं सावद्यव्यापारपरिहाररूपत्वेन प्रधानमोक्षांगत्वात्, दानं पूजानुग्रहबुद्ध्या वितरणं, सुपात्रं ज्ञानदर्शनचारित्राधारः साधुः, तस्मिन्, अनेन पात्रे दानमनर्घफलमेवेति सूचयति, यदुक्तं प्रज्ञप्त्यां—समणोवासगस्सणं भंते तहारूवं असंजय अविरय अपडिहयपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वासाणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ? गोयमा एगंतसो पावेकम्मे कज्जइ, नत्थि से कावि निज्जरा कज्जइत्ति. एवं तर्हि दीनादीनां दानं न देयमित्यापन्नं, असंगतं चैतत्, अर्हतापि सांवत्सरिकदानस्य पात्रापात्रविचारविरहेण प्रवर्तितत्वात्, सत्यं. गुणबुद्ध्या दानमाश्रित्यायं विधिरुक्तः, कृपादानं तु न क्वापि जिनैर्निवारितं, आह च—

सव्वेहिंपि जिणेहिं । दुज्जयजियरागदोसमोहेहिं ॥ सत्ताणुकंपणट्ठा । दाणं न कहिंवि पडिसिद्धं ॥ १ ॥

तथा श्रवणमाकर्णनं धर्मस्येति गम्यते, क? सुतीर्थे, सुष्टु सुखेन वा तीर्यते भवोदधिरनेनेति सुतीर्थं, सम्यग्ज्ञानक्रियासंपन्नः साधुः, अनेन क्रियाविकले धर्मश्रवणनिषेधमाह, यदा-

ह—चारित्रेण विहीनः । श्रुतवानपि नोपजीव्यते सद्भिः ॥ निर्मलजलसंपूर्णः । कुलजैश्चांमालकूप इव ॥ १ ॥ सुसाधुः वर्णितस्वरूपस्तस्य सेवा पर्युपास्तिः, अनेनासाधुसंसर्गनिषेधमाह, यतः—अंबस्स य लिंबस्स य । कुणहंपि समागयाइं मूलाइं ॥ संसग्गीइ विनठ्ठो । अंबो लिंबत्तणं पत्तो ॥ ॥ १ ॥ अयं शिवलोकमार्गो भवतीति रूपकद्वयार्थः ॥ ४२ ॥ इत्थमनेकधा शास्त्रेषु सन्मार्गप्रतिपादनेऽपि रागाद्युपहतचेतसां बहुतरजीवानामुन्मार्गगामित्वमवलोक्य सखेदं रागादिमाहात्म्यमाह—

॥ मूलम् ॥—रागोरगगरलभरो । तरलइ चित्तं तावइ दोसग्गी ॥ कुणइ कुमग्गपवित्तिं । महामईणंपि हा मोहो ॥ ४३ ॥ व्याख्या—राग एव दारुणं मरणहेतुत्वादुरगगरलं सर्पविषं तस्य भर उत्कर्षः, किं? तरलयति विधुरयति चित्तं मनः, तथा तापयति दुनोति प्रस्तुतत्वात् चित्तमेव, द्वेष एव संतापकत्वादग्निर्द्वेषाग्निर्मत्सरानलस्तथाकरोति विधत्ते, कां? कुमार्गप्रवृत्तिं कुदर्शनग्रहमिथ्याभिनिवेशवितथप्ररूपणानुष्ठानादिरूपां महामतीनामपि, आस्तां मुग्धबुद्धिनां, हा इति खेदे मोहोऽज्ञानं, एतेन रागद्वेषमोहोपहतानां तत्वोपदेशनानर्हत्वमाहेति गाथार्थः ॥ ४३ ॥ तथा च—

॥ मूलम् ॥—अन्नाणंधा मिच्छत्त—मोहिया कुग्गहुग्गगहगहिया ॥ मग्गं न नियंति न सद्द-

—हंति चेठंति न य उचियं ॥ ४४ ॥ व्याख्या—अंधा इवांधा अज्ञानेनांधाः, तथा मिथ्यात्वेन
मोहिता भ्रमिताः, तथा कुग्रहोऽसदभिनिवेशः स एवोग्रग्रहो भूतादिस्तेन गृहीता आविष्टास्ते, किं?
यथासंख्यं न नियंतित्ति न पश्यंति मार्गमात्मना, न श्रद्दधति न बहुमन्यंते परोपदिष्टमपि मार्गमेव,
न च चेष्टंते व्यवहरंत्युचितमनुरूपं, मार्गस्यैव क्रियाविशेषणमिदं, तथाहि—अज्ञानोपहतात्मनामं-
धानामिव सत्वानां तत्वावलोकनविमुखी सेमुषी, मिथ्यात्ववासनाविपर्यस्तबुद्धिनां दिग्मूढानामिव त
त्वश्रद्धानबहिःप्लवा मनोवृत्तिः, कुदेवादिग्रहावेशवशंवदानामुन्मत्तानामिव सर्वतो हास्यहेतुरसमंज-
सा चेष्टेति गाथार्थः ॥ ४४ ॥ इत्थमवगतसम्यग्ज्ञानादिमोक्षमार्गः सुदुर्जयरागादिदोषजालादुद्विज-
मानः समुल्लसितवीर्यः कश्चिद्भावमार्गमेव प्रतिपद्यते, तदशक्तिमांश्च प्रतिपन्नद्रव्यस्तव. सर्वविरतिला-
लसः खलु देशविरतिपरिणाम इति वचनात् सर्वविरतिलालसत्वं यथा भावयति तथाह—

॥ मूलम् ॥—ता कइया तं सुदीणं । सा सुतिही तं भवे सुनक्खत्तं ॥ जम्मि सुगुरुपरतंतो ।
चरणभरधुरं धरिस्समहं ॥ ४५ ॥ व्याख्या—यस्मादेव रागादयो विजृंभंते तत्तस्मात् कदा कस्मिन्
काले तत्सुदीनं प्रसन्नदिगादि, सा सुतिथिर्नंदादिका, तत् सुनक्षत्रं पुष्यादि भवेदित्याशिषि सप्तमी,

सुंदरत्वं चैतेषां सकलकल्याणनिबंधनचरणप्राप्तिहेतुत्वात्, यस्मिन् दिने तिथौ नक्षत्रे वा सुगुरुपरतं-
त्र· सुंदरधर्माचार्यायत्त', शोभनत्वं चास्य—धर्मज्ञो धर्मकर्ता च। सदा धर्मपरायण ॥ सत्वानां ध-
र्मशास्त्रार्थ—देशको गुरुरुच्यते ॥ १ ॥ इत्यादिलक्षणयोगात्, तत्परतंत्रताभणनेन च गुर्वायत्ताः
सर्वसंपद इत्यावेदयति, यतोऽभिहितं—णाणस्स होइ भागी। थिरयरओ दंसणे चरित्ते य ॥ ध-
न्ना आवकहाए। गुरुकुलवासं न मुंचंति ॥ १ ॥ अन्यच्च—छट्ठट्ठमदसमदुवा—लसेहिं मासद्ध-
मासखमणेहिं ॥ अकरंतो गुरुवयणं। अणंतसंसारिओ होइ ॥ २ ॥ चरणमेव दुर्वहत्वसाम्याद्भर-
स्तस्य धूर्धुरा तां धरिष्यामि प्रतिपत्स्येऽहमिति गाथार्थ ॥ ४५ ॥ अथ प्रस्तुतार्थसमर्थनायाभिष्टदे-
वतास्तुतिगर्भसंबोधनेन मध्यमंगलमाविष्कुर्वन् मुग्धजनप्रवादतिरस्कारमाह—

॥ मूलम् ॥—सवत्र अत्थि धम्मो। जा मुणियं जिण न सासणं तुम्ह ॥ कणगाउराण क-
णगंव। ससियपयमलनमाणाणं ॥ ४६ ॥ व्याख्या—सर्वत्र सर्वेषु कपिलशैवशाक्यादिविविधमतेषु
अस्ति विद्यते धर्म इति विवेकविकलानामभ्युपगमो वर्तते यावत् किं? यावन्न मुणिनं नाधिगतं हे
जिन विगलिताशेषरागादिदोष! जातौ चात्रैकवचनं, शासनं द्वादशांगं तुम्हत्ति युष्माकं वक्त्यपेक्ष-

या बहुवचनं, अनेन जातिव्यक्त्योः कथंचिदभेदमाह, किमिव कुत्र केषामित्याह—कनकातुराणां हृत्पूरकफलचूर्णभावितात्मनां कनकमिव सुवर्णमिव सर्वं तेष्टकाकाष्टपाषाणादिष्वस्तीत्यभ्युपगम इतीहापि द्रष्टव्यं, किंविशिष्टानां तेषां? सह सितया शर्करया वर्तत इति ससितं, तच्च तत्पयश्च दुग्धं तदलभमानानामप्राप्नुवतामपिबतामिति तात्पर्यमिति गाथार्थः ॥ ४६ ॥ इति श्रीदेवभद्रसूरिविरचिते दर्शनशुद्धिप्रकरणविवरणे मार्गतत्वं तृतीयं समाप्तं ॥ श्रीरस्तु ॥

---

व्याख्यातं मार्गतत्वमधुना मूलद्वारगाथाक्रमप्राप्तं साधुतत्वं विव्रियते—संबंधश्च पूर्वेण सहास्य मार्गतत्वमभिहितं, तच्च सुतीर्थमुखाच्छ्रोतव्यं, सुतीर्थं च साधुरिति प्रस्तावात्साधुतत्वमत्राभिधीयते, तत्रादौ गाथा—

॥ मूलम् ॥—अठारस जे दोसा । आयारकहाए वन्निया सुत्ते ॥ ते वज्जंतो साहू । पन्नत्तो वीयराएहिं ॥ १ ॥ व्याख्या—सुगमा, नवरं, सूत्रे सिद्धांते सामान्येन विशेषतस्त्वाचारकथायां दशवैकालिकषष्ठाध्ययने. तथा साधयति पौरुषेयीभिर्विशिष्टक्रियाभिरपवर्गमिति साधुर्यतिरिति ॥ १ ॥

के एतेऽष्टादश दोषा इत्याह—

॥ मूलम् ॥—पढमं वयछक्कं । कायछक्कं अकप्प गिहिभाणं ॥ पलियंकनिसेज्जा चिय । सिणाणसोहाविवज्जणयं ॥ २ ॥ व्याख्या—प्रथममिति क्रमार्थं, व्रतानां प्राणिवधविरमणादीनां रात्रिभोजनविरमणावसानानां, षट् परिमाणमस्य षट्कं, इह च व्याख्यानाद्व्रतानां विराधनानि प्रत्येकं दोषत्वेनावसेयानि, एवं कायषट्केऽपि कायानां, पृथिवीकायादीनां षट्कं कायषट्कं. अथाद्यव्रतविराधनाभणनेनैव कायषट्कविराधनमुक्तार्थमिति चेत्सत्यं, विशेषरूपतयास्य भणनात्, विशेषाणां तु सामान्यात्कथंचिद्भिन्नरूपत्वान्नोक्तसंख्याहानिरपि. अकल्पो द्विविधः, शिक्षकस्थापनाकल्पोऽकल्पस्थापनाकल्पश्च, तत्र शिक्षकस्थापनाकल्पोऽनधीतपिंडनिर्युक्त्यादिना आनीतमप्याहारादि न कल्पत इति, उक्तं च—अणहीया खलु जेणं । पिंडेसणसेज्जवत्थया एसा ॥ तेणाणियाणि जइणो । कप्पंति न पिंडमाईणि ॥ १ ॥ उउबद्धंपि न अनला । वासावासासु दोवि नो सेहा ॥ दिक्खिज्जंती सेह । ठवणाकप्पो इमो होइ ॥ २ ॥ अकल्पस्थानादकल्पं तु स्वयमेव वक्ष्यति. दोषत्वं चैतस्य विपर्ययासेवनात. गृहिणो भाजनं गृहिभाजनं स्थालकरोटकादि, भोजनाद्यर्थमासेव्य-

मानमिति गम्यं. उक्तं च—

कंसेसु कंसपाएसु । कुंम्मोएसु वा पुणो ॥ भुंजंतोसणपाणाई । आयारा परिभस्सइ ॥ १ ॥

कांस्येषु करोटकादिषु, कांस्यपात्रेषु तलिकादिषु, कुंडमोदेषु हस्तिपादाकारेषु मृन्मयादिषु. इह जकारलोपः प्राकृतत्वात्, समाहारत्वाच्चैकत्वमेवमुत्तरत्रापि. पर्य्यंकः प्रतीतः, शयनासनविषयीक्रियमाणमिति गम्यं, उपलक्षणं चैतत् खट्वामंचकास्पंदिकादीनां. यदाह—आसंदीपलियंकेसु । मंचमासालयेसु वा ॥ अणायरियमज्जाणं । आसइत्तु सइत्तु वा ॥ १ ॥ आस्पंदपर्यंकमंचाः प्रतीताः, आसालकः समंगकसमन्वित आसनविशेषः, शुषिरत्वं चैतेषु दोषः, निषदनं निषद्याः समयप्रसिद्धा भिक्षागतस्योपवेशनक्रिया, यदवाचि—

गोयरग्गपविट्ठस । निसिज्जा जस्स कप्पइ ॥ इमेरिसमणायारं । अवज्जइ अबोहियं ॥ १ ॥

इत्यादि, अपिचेति समुच्चये, स्नानं मज्जनं देशतः सर्वतो वा, उपलक्षणत्वात्कल्करोध्रादिभिरुद्वर्तनं च. तथा च—वाहिउ वा अरोगी वा । सिणाणं जो उपहए ॥ मुक्कंतो होइ आयारो । जढो भवइ संजमो ॥ १ ॥ इत्यादि, शोभा विभूषा दशनघर्षणनखघटनरोमकल्पनकेशसमारचनाका-

लवस्त्रप्रक्षालनादिरूपा, तस्या विवर्जनमेव विवर्जनकमनुष्टीयमानमिति गम्यं, यतः—निगिणस्स वावि मुंडस्स । दीहरोमनहंसिणो ॥ मेहुणाउवसंतस्स । किं विभूसाए कारियं ॥ १ ॥ विभूसावत्तियं भिक्खू । कम्मं बंधइ चिक्कणं ॥ संसारसागरे घोरे । जेणं पडइ दुत्तरे ॥ २ ॥ इत्यादि. इह चाद्यषट्कद्वयेन मूलगुणाः प्रतिपादिता, अकल्पादिदोषषट्केन तूत्तरगुणा इति गाथार्थः ॥ २ ॥ इह शेषदोषाणां सुज्ञानत्वादकल्पस्थापनाकल्पदोषे तु सति शेषदोषाणामपि संभवात्सप्रतिपक्षतद्विषयविभागस्य च दुर्ज्ञानत्वात्तमेव विवृणोति—

॥ मूलम् ॥—पिंडं सेज्जं वत्थं । पत्तं चारित्तरक्खणट्ठाए ॥ अकप्पं वज्जेज्जा । गिण्हेज्जा कप्पियं साहू ॥ ३ ॥ व्याख्या—पिंडं समयपरिभाषया चतुर्विधमाहारं, शय्यां वसतिं, वस्त्रमंतरकल्पादि, पात्रमलाब्वादि, अकल्पमकल्पनीयं वर्जयेत्परिहरेत, कस्मै? चारित्ररक्षणार्थाय नियमपरिपालनप्रयोजनाय, तथा गृह्णीयादुपाददीत श्रुतत्वात्पिंडाद्येव, किंविशिष्टं? कल्पितमाधाकर्मादिदोषरहितं साधुरिति गाथार्थः ॥ ३ ॥ इह च पिंडादीनामाधाकर्मादिदोषैरकल्पत्वमिति तान् विभणिषुः प्रस्तावनामाह—

॥ मूलम् ॥—जीवा सुखेसिणो तं । सिवंमि तं संजमेण सो देहे ॥ सो पिंडेण सदोसो । सो पम्किुठो इमे ते य ॥ ४ ॥ व्याख्या—जीवाः प्राणिनः सुखैषिणः शर्माभिलाषिणः, यदवाचि—सव्वेवि सुक्खकंखी । सव्वेवि हु डुक्खभीरुणो जीवा ॥ सव्वेवि जीवियपिया । सव्वे मरणाउ बीहंति ॥ १ ॥ तत्पुनः सुखं तात्विकं शिवे एव सर्वकर्माभावमोक्षे एव, तत्पुनः शिवं संयमेन पूर्वोक्तेन, स पुनः संयमो देहे आधारभूते, शरीरमाद्यं खलु धर्मसाधनमिति वचनात्. स पुनर्देहः पिंडेन पूर्वोक्तेन, सह दोषैः सदोषः स पुनः पिंमः प्रतिकुष्टः प्रतिषिद्धः सर्वजिनैरिति गम्यते. इमे अनंतरमेव वक्ष्यमाणतया प्रत्यक्षास्ते पुनर्दोषाः, च पुनरर्थे, सर्वेष्वपि च तच्छब्देषु योज्यते, तेनोचितं चैतदिगाथार्थः ॥ ४ ॥ प्रस्तावितपिंमदोषाणां सविभागसंख्यामाह—

॥ मूलम् ॥—सोलस उग्गमदोसा । सोलस उप्पायणाए दोसा उ ॥ दस एसणाए दोसा । बायालीसं इह हवंति ॥ ५ ॥ व्याख्या—षोमशोद्गमनमुद्गम उत्पत्तिः प्रभव इति यावत्, प्रस्तावात्पिंमस्य, तं दूषयंतीत्युद्गमदोषाः, तथा षोडशोत्पादनोपार्जना निवर्तनेति यावत्. पिंडस्यैव, तस्यामपि दोषास्तुरप्यर्थः, तथा दश एषणायां गवेषणायां दोषाः, सर्वमीलने यत्स्यात्तदाह—द्विचत्वारिंशदि

त्येवमुक्तनीत्या भवंतीति गाथार्थः ॥ ५ ॥ तत्र तावदुद्गमदोषानाह—

॥ मूलम् ॥—आहाकम्मुद्देसिय—पूयीकम्मे य मीसजाए य ॥ ठवणापाहुडियाए । पाओयरकीयपामिच्चे ॥ ६ ॥ परियट्टिए अभिहडु—ब्भिन्ने मालोहडेइ य ॥ अच्छिज्जे अणुसिट्ठे । अोयए य सोलसिमे ॥ ७ ॥ व्याख्या—आधाय विकल्प्य यतिं मनसि कृत्वा सचित्तस्याचित्तीकरणमचित्तस्य वा पाको निरुक्तादाधाकर्म १. उद्देशः साध्वर्थं संकल्पः, स प्रयोजनमस्येत्यौद्देशिकं, यत्पूर्वकृतमोदकक्षोदादि तत्साधूद्देशेन दध्यादिना गुरूपाकेन च संस्कुर्वतो भवति २. पूतं पवित्रं तस्य कर्म, शुद्धस्याप्याधाकर्मिकावयवेन सन्मिश्रीकरणं शुचिद्रव्यस्यैवाशुचिद्रव्येण, अत्रैकारांतशब्दः प्रथमैकवचनांतो दृश्यः, चः समुच्चये ३. यदात्मार्थं साध्वर्थं चादित एव मिश्रं जातं पाकभावमुपगतं तन्मिश्रजातं ४. साधुदानार्थं किंचित्कालं क्षीरादेः स्थापनं स्थापना ५. कालांतरभाविन आहारादेरिदानीं सन्निहिताः साधवः संति, तेषामप्युपयोगो भवत्विति बुद्ध्या इदानीमेव करणं, समयपरिभाषया प्राभृतिकासन्निकृष्टस्य वा विवाहादेः कालांतरे साधुसमागमं संचिंत्योत्कर्षणं वा, एकारः पादपूरणे ६.

अंधकारव्यवस्थितस्य वह्निप्रदीपमण्यादिना, भित्त्यपनयनेन वा बहिर्निष्कास्य द्रव्यधारणेन वा प्राडुःकरणं प्राडुःकारः, ह्रस्वता छंदोवशात् ७. साध्वर्थं मूल्येन क्रीयतेस्मेति क्रीतं ८. साध्वर्थमुद्यतकं गृहीत्वा यदन्नादि दीयते तत्प्रामित्यकं, इह च कचिद्विभक्तिलोपः प्राकृतत्वादिति ए. ॥ ६ ॥ तथा स्वद्रव्यमर्पयित्वा परद्रव्यं तत्सदृशं गृहीत्वा यद्दीयते तत्परिवर्तनं १०. गृहग्रामादेः साध्वर्थमानीतमभिहृतं ११. कुतपादिस्थस्य घृतादेर्दानार्थं यन्मृत्तिकाद्यपनयनं तद्भिन्नं १२. मालात्प्रसिद्धात्, उपलक्षणं चैतदधउर्ध्वग्राह्यतायाः, तेन शिकादेर्भूमिगृहाच्च अपहृतमानीतं साधुदानाय मालापहृतं १३. इतिर्वाक्यसमाप्तौ, यदाच्छिद्य परकीयं हठाद्गृहीत्वा स्वामी प्रभुश्चौरो वा ददाति तदाच्छेद्यं १४. गोष्ठीभक्तादि सर्वैरदत्तमननुमतं वा एकः कश्चिद्ददाति तदनुत्सृष्टं १५. स्वार्थमधिश्रयणे सति साधुसमागमश्रवणात्तदर्थं पुनर्यो धान्यावापः सोऽध्यवपूरकः, चः समुच्चये १६.

षोडश उद्गमदोषा इति प्रकृतं, इह च दोषप्रक्रमेऽपि कचिद्दोषवतोऽभिधानं, तयोर्भेदविवक्षणादेवमुत्तरत्राप्यवसेयं, एते च गृहस्थसंभवाः साध्वर्थं तेन विधीयमानत्वादितिगाथाद्वयसमासार्थः ॥ ॥ ७ ॥ अथोत्पादनादोषानाह—

॥ मूलम् ॥—धाईदूइनिमित्ते । आजीववणीमगेतिगिछाय ॥ कोहे माणे माया । लोजे य हवंति दस एए ॥ ८ ॥ पुव्विं पच्छा संथव । विज्जामंते य चुन्नजोगे य ॥ उप्पायणाए दोसा । सोलसमे मूलकम्मे य ॥ ९ ॥ व्याख्या—बालस्य क्षीरमज्जनमंडनक्रीडनांकारोपणकर्मकारिण्यः पंच धात्र्यः, एतासां कर्म भिक्षार्थं कुर्वतो मुनेर्धात्रीपिंडः १. मिथः संदेशकथनं दूतीत्वं, तत्कुर्वतो भिक्षार्थं दूतीपिंडः २. अतीतानागतवर्तमानकालेषु लाभालाभादिकथनं निमित्तं, तद्भिक्षार्थं कुर्वतो निमित्तपिंडः ३. जातिकुलगणकर्मशिल्पादिप्रधानेभ्य आत्मनस्तद्गुणारोपणं भिक्षार्थमाजीवपिंडः ४. श्रमणब्राह्मणकृपणातिथिश्वानादिभक्तानां पुरतः पिंडार्थमात्मानं तत्तद्भक्तं दर्शयतो वनीपकपिंडः ५. वमनविरेचनबस्तिकर्मादि कारयतो वैद्यभैषज्यादि वा सूचयतः पिंडार्थं चिकित्सापिंडः ६. विद्यातपःप्रभावज्ञापनं राजपूजादिख्यापनार्थं क्रोधफलदर्शनं वा भिक्षार्थं कुर्वतः क्रोधपिंडः ७. लब्धिप्रशंसोत्तानस्य परेणोत्साहितस्यावमतस्य वा गृहस्थाभिमानमुत्पादयतो मानपिंडः ८. नानावेषभाषापरिवर्तनं भिक्षार्थं कुर्वतो मायापिंडः ९. अतिलोभाद्भिक्षार्थं बहु पर्यटतो लोभपिंडः १०. भवंति स्युर्दशैतेऽनंतरोक्ता उत्पादनादोषा इति योगः ॥ ८ ॥ तथा पूर्वसंस्तवं जननीजनका-

दिद्वारेण, पश्चात्संस्तवं श्वश्रूश्वशुरादिद्वारेणात्मपरवयोऽनुरूपं संबंधं भिक्षार्थं घटयत. पूर्वपश्चात्संस्तवपिंडः ११. विद्यां मंत्रं चूर्णं योगं च भिक्षार्थं प्रयुंजानस्य चत्वारो विद्यादिपिंमाख्या दोषा, तत्र जपहोमादिसाध्या स्त्रीदेवताधिष्टाना वा विद्या १२. पाठमात्रसिद्धः पुरुषाधिष्टानो वा मंत्रः १३. चूर्णानि नयनांजनादीन्यंतर्धानादिफलानि १४. पादप्रलेपादय. सौभाग्यदौर्भाग्यकरा योगः १५. चशब्दौ समुच्चयार्थौं, उत्पादनायाः पिंमोपार्जनस्य दोषा दूषणान्येते पंचदश, षोडशः पुनर्गर्भस्तंभगर्भाधानप्रसवस्नपनमूलरक्षाबंधनादि भिक्षार्थं कुर्वतो मूलकर्मपिंड १६. चः पुनरर्थः प्रयुक्त एव. एते च साधुप्रभवा आहारलुब्धेन तेन क्रियमाणत्वादिति गाथासमासार्थः ॥ ९ ॥ अथैषणादोषानाह—

॥ मूलम् ॥—संकियमक्खियनिक्खित्त—पिहियसाहरियदायगुम्मीसे ॥ अपरिणयलित्तछड्डिय । एसणदोसा दस हवंति ॥ १० ॥ व्याख्या—आधाकर्मादिशंकाकलुषितो यदन्नाद्याददत्ते तत् शंकितं, यं च दोषं शंकते तमापद्यते १. म्रक्षितं पृथिव्यादिना सचेतनेन सुराशुच्यादिना वाचेतनेनापि गर्हितेन स्पृष्टं करादि, तेन दीयमानं भक्ताद्यपि तथोच्यते २. निक्षिप्तं पृथिव्युदकतेजोवायुवनस्प-

तिषु त्रसेषु च यदचित्तमपि स्थापितं, पिहितं स्थगितं सचेतनफलादिना ४. दानभाजनस्थमयोग्यं सचित्तेषु पृथिव्यादिषु निक्षिप्य तेनैव भाजनेन ददतः संहृतं ५. बालवृद्धपंडकवेपमानज्वरितांधाव्यक्तमत्तोन्मत्तकरचरणनिगडितपादुकारूढकंडकपेषकभर्जककर्तकलोचकविंखकपिंजकदलकव्यालोडकभोजकपट्कायविराधका दातृत्वेन प्रतिषिद्धाः, यावत् स्त्री वेलामासवती गृहीतबाला बालवत्सा वा, एभ्यो अन्नादि गृहीतुं साधोर्न कल्पते ६. देयद्रव्यं खंडादि सचित्तेन कणादिना मिश्रं ददत उन्मिश्रं ७. देयद्रव्यमचित्तत्वेनापरिणमदपरिणतं ८. लिप्तं लेपवद्दध्यादि. किलैतदपि कारणं विना न ग्राह्यं, यदाह—घित्तव्वमलेवकडं । लेवकडे माहु पच्छकम्माई ॥ अत्रैपवतो गुणमाह—नयरसगेहि पसंगो । न य भुत्ते अंगपीडा य ॥ १ ॥ ९. घृतादि छर्दयन् यद्ददाति तच्छर्दितं, छर्दमाने घृतादौ तत्रस्थस्यागंतुकस्य वा सर्वस्य जंतोर्मधुबिंदूदाहरणेन विराधनासंभवात् १०. एषु च प्रथमैकवचनांतता सर्वत्र दृश्या. एपणादोषा एते दश भवंति, एते गृहिसाधुप्रभवाः तथैव संभवात्, तथेहानुक्ता अपि पंच ग्रासैपणादोषा शिष्यहितायाभिधीयंते—संयोजना. प्रमाणातिरिक्तता अंगारो. धूमः कारणाभावश्च. तत्र रसलोभाद् द्रव्यस्य मंडकादेर्द्रव्यांतरेण खंडादिना वसतेर्बहिरंतर्वा योज

नं संयोजना १. धृतिबलसंयमयोगा यावता न सीदंति तावदाहारप्रमाणं, अधिकाहारस्तु वमनाय मृत्यवे व्याधये वेति तत्परिहारात् प्रमाणातिरिक्ततादोष. २. स्वादन्नं तद्दातारं वा प्रशंसन् यद्भुंक्ते स रागाग्निना चारित्रेंधनस्यांगारीकरणादंगारदोषः ३. निंदन् पुनश्चारित्रेंधनं दहनधूमकरणाद्धूमदोष. ४. क्षुद्वेदनाया असहनं, क्षामस्य च वैयावृत्याकरणं ईर्यासमितेरशुद्धिः, प्रेक्षोपेक्षादेः संयमस्य चापालनं, क्षुदातुरस्य प्रबलाग्निउदयात प्राणप्रहाणशंका, आर्तरौद्रपरिहारेण धर्मध्यानास्थिरीकरणं चेति भोजनकारणानि, तदभावे भुंजानस्य कारणाभावो दोष. ५. एवं सर्वमीलने सप्तचत्वारिंशद्भवंति. एतद्विषयविभागप्रतिभेदादिविस्तरार्थिना पिंडनिर्युक्त्याद्यन्वेषणं विधेयं, इह तु ग्रंथगौरवभयान्न कृत इति गाथार्थः ॥ १० ॥ उक्तदोषविशुद्धस्यैव पिंडस्य ग्राह्यतां तद्विशुद्धिविषये विशेषं चाह—

॥ मूलम् ॥—यद्दोसविमुक्को जईण । पिंडो जिणेहणुण्णाउ ॥ सेसकिरियाठियाणं । एसो पुण तत्तउ नेउ ॥ ११ ॥ व्याख्या—एतद्दोषविमुक्त उक्तस्वरूपद्विचत्वारिंशद्दूषणरहितो यतीनां पिंडो भक्तादिर्जिनैरनुज्ञातो ग्राह्यतयेति प्रक्रमः, एष पुनर्विशुद्धः पिंडस्तत्वतः परमार्थवृत्त्या, शेषक्रियास्थितानां पिंडविशुद्ध्यपेक्षया या· शेषक्रिया· स्वाध्यायप्रत्युपेक्षणादिकास्तासु ये स्थिता आश्रिता-

स्ते तथा तेषां ज्ञेयः. न तु तद्विकलामुक्तदोषपरिहारमात्रवतां, मूलाभावे उत्तरस्याकिंचित्करत्वादि-
ति भाव इति गाथार्थः ॥ ११ ॥ ननु गृहस्थेन भक्तिविहितमाधाकर्म गृह्णंस्त्रिधा शुद्धस्य साधोः
को दोष इत्याह—

॥ मूलम् ॥—जस्सट्ठा आहारो । आरंभो तस्स होइ नियमेण ॥ आरंभे पाणिवहो । पा-
णिवहे होइ वयभंगो ॥ १२ ॥ व्याख्या—यस्य साधोरर्थाय निमित्ताय आहारोऽनशनादि पच्यत
इति शेषः. आरंभः खंडनपेषणादिसंधुक्षणादिव्यापारस्तस्य भवति नियमेन. तस्य गम्यमानत्वादारं-
भे च प्राणिवधः, प्राणिवधे च भवति व्रतभंगः, अयमर्थः—यद्यपि साधोः पचनादौ न व्यापारस्त-
थापि मम निमित्तं निष्पन्नमिदमिति जानतो निःशूकतया भुंजानस्य कथमिव त्रिकरणशुद्धिः स्या-
त्! तत्परिभोगतस्तस्यानुमतत्वादिति गाथार्थः ॥ १२ ॥ एवमुपदिष्टेऽपि यत् क्लिष्टकर्मा आधाकर्म
निःशूकतया भुंक्ते तस्यानाराधकत्वमाह—

॥ मूलम् ॥—भुंजइ आहाकम्मं । सम्मं न जो पडिक्कमइ लुद्धो ॥ सव्वजिणाणाविमुहस्स ।
तस्स आराहणा नत्थि ॥ १३ ॥ व्याख्या—भुंक्तेऽभ्यवहरति यः साधुराधाकर्म वर्णितस्वरूपं, सम्य-

ग्लावशुद्ध्या न च नैव प्रतिक्रामति प्रायश्चित्तप्रतिपत्या तद्भोजनात् प्रतिनिवर्तते, किंविशिष्टः सन्? लुब्धो रसनालंपटः, अनेन यः कथंचित् सकृद्भुक्त्वापि सम्यक्प्रतिक्रामति, यश्चालुब्धो ग्लानादिकारणे भुंक्ते तयोराराधकत्वमाह—तस्य द्रव्ययतेः सर्वे च भरतैरवतविदेहजास्ते जिनाश्च तेषामाज्ञा द्वादशांगी तस्यां विमुख प्रतिकूलस्तस्याराधना परलोकत्वं नास्तीति गाथार्थः ॥ १३ ॥ यद्येवं तर्हि कथमागमे दुर्भिक्षग्लानाद्यागाढप्रयोजने आधाकर्मादिग्रहणमनुज्ञातमित्याह—

॥ मूलम् ॥—संथरणम्मि असुद्धं । दुण्हवि गेण्हंतदिंतयाणहियं ॥ आउरदिठंतेण । तं चेव हियंति निदिठं ॥ १४ ॥ व्याख्या—संथरणे संस्तरणे प्रसुकैषणीयाहारादिनैव निर्वाहे सत्यशुद्धमनेषणीयं गृह्यमाणं दीयमायं चेति गम्यते, द्वयोरपि, नैकस्य कस्यापि, गृहितृदात्रोः साधुश्रावकयोरहितमनर्थहेतुत्वादपथ्यं स्यादित्येष उत्सर्गः. अपवादतस्तु आतुरो रोगी तस्य दृष्टांत उदाहरणं, तेन, यथा हि रोगिणः कस्यामप्यवस्थायां पथ्यमपथ्यं, कस्यांचित्तु पुनरपथ्यमपि पथ्यं स्यात्, तथा च भिषक्शास्त्रं—

उत्पद्यते हि सावस्था । देशकालामयान् प्रति ॥ यस्यां कार्यमकार्यं स्यात्। कर्मकार्यं तु वर्ज-

येत ॥ १ ॥ अनेन न्यायेन तं चेवत्ति अशुद्धमपि हितमवस्थोचितत्वात् पथ्यं, द्वयोरपास्यत्रापि यो-
गोऽसंस्तरणेऽनिर्वाहे दुर्भिक्षग्लानाद्यवस्थायामित्यर्थः. अयमभिप्राय —यद्यपीदमाधाकर्माद्याङ्गाद्य-
नेकदोषकारणं वर्णितं. तथापि—सव्वत्थ संजमं संज—माउ अप्पाणमेव रक्खिज्जा ॥ मुच्चइ अइ-
वायाओ । पुणो विसोही नयाविरई ॥ १ ॥ काहं अच्छित्ति अ दुवा अहीहं । तवोवहाणेसु य उ-
ज्जमिस्सं ॥ गणं च नीईअ सारविस्सं । सालंबसेवीसमुवेइ मोक्खं ॥ २ ॥ सालंबणो पडंतो । अ-
प्पाणं दुग्गमेवि धारेइ ॥ इय सालंबणसेवा । धारेइज्जइ असढभावं ॥ ३ ॥ अप्पेण बहुमिसि-
ज्जा । एयं पंडियलक्खणं ॥ सव्वासु पडिसेवासु । एयं अट्ठपयं विऊ ॥ ४ ॥ नवि किंचि अणुण्णा-
यं । पडिसिद्धं वावि जिणवरिंदेहिं ॥ एसा तेसिं आणा । कज्जे सच्चेण होयव्वं ॥ ५ ॥ इत्याद्याग-
मान्निशम्य यथावसरं बहुतरगुणलाभाकांक्षया गृह्यमाणं दीयमानं च न दोषायेति गाथार्थः ॥ १४ ॥ अ-
निर्वाहे अनेषणीयपरिभोगोऽपि हितायेति प्रतिपादितं, तत्किं यथाकथंचिदेव नेत्याह—

॥ मूलम् ॥—फासुयएसणिएहिं । फासुयओहासिएहिं किं एहिं ॥ पूईए मीसएण य । आ-
हाकम्मेण जयणाए ॥ १५ ॥ व्याख्या—प्रगता असवो येभ्यस्तानि प्राशुकानि, तान्येषणीया-

न्याधाकर्मादिसमस्तदोषरहितानि, तैः प्रथमं तावदिति शेषः, तदलाभे प्राशुक इव भाषितैरवभाषितं समयसंज्ञया याचितं, एतदसंपत्तौ च क्रीतैः, तदसंभवेऽपि पूइयेत्ति वचनस्यातंत्रत्वात् पूतिभिः, एवमुत्तरत्रापि, तदप्राप्तावपि मिश्रकैः, ततोऽप्याधाकर्मभिः, इह चकारोऽनुक्तसमुच्चये, ततस्तत्र विधिकुशलेन याचनादोषमवधिं कृत्वा लघुतमलघुतरलघ्वादिदोषाश्रयणेन तावद्गवेषणीयं यावत्पूतिमिश्राधाकर्माणि, तैरन्नपानादिभिरातुरस्य शरीरसंधारणा कार्येत्युपस्कारः, तत्रापि यतनया अनागाढप्रयोजने समस्तक्षेत्रे परिभ्रमणेन यथान्यदोषपुष्टस्यालाभे उत्तरोत्तरदोषदुष्टस्य ग्रहणरूपया, आगाढे तु यथाकथंचित् सहसैव ग्राह्यमिति भाव इति गाथार्थः ॥ १५ ॥ नन्वाधाकर्मभोजिनः पूर्वमाज्ञाभंगः प्रतिपादितः, सांप्रतं पुनर्यतनावतस्तदेवानुज्ञायत इति कथं न व्यभिचरतीत्याह—

॥ मूलम् ॥—उस्सग्गेण निसिद्धाणि । जाणि दव्वाणि संथरे जइणो ॥ कारणजाए जाए । अववाए ताणि कप्पंति ॥ १६ ॥ व्याख्या—उत्सर्गः सामान्योक्तो विधिस्तेन निषिद्धानि निवारितानि यानि द्रव्याणि सचेतनाचेतनादीनि संस्तरे द्रव्यापदादिविरहे यतेः साधोस्तानि, किं कारणजाते द्रव्यापदादिहेतुसमूहे जाते समुत्पन्ने सति अपवादे द्वितीयपदे कल्पंते संयमोपकाराय भवंति.

तदयमभिप्रायः—पूर्वसूत्राण्युत्सर्गविषयाणि एतत्पुनरपवादविषयमिति भिन्नविषयत्वान्न विरोधमिति गाथार्थः ॥ १६ ॥ अथापवादः किंस्वरूपो भवतीत्याह—

॥ मूलम् ॥—पुढवाइसु आसेवा । उप्पन्ने कारणंमि जयणाए ॥ मिगरहियस्स ठियस्स । अववाउ होइ नायव्वो ॥ १७ ॥ व्याख्या—पृथिव्यादिषु, षष्ठीसप्तम्योरर्थं प्रत्यभेदात् पृथिव्यप्तेजोवायुवनस्पतित्रसादीनामुत्पन्ने कारणे भणितस्वरूपे यतनया गुरुदोषत्यागेन लघुदोषाश्रयणरूपया. आसेवा परिभोगोऽपवादो भवतीति ज्ञातव्य इति संटंकः. कस्य सेवास्थितस्य, मूलोत्तरगुणेषु दशविधकल्पे वा वर्तमानस्य साधोरिति गम्यते. किंविशिष्टस्य मृगा अज्ञा अगीतार्था इत्यर्थः, तै रहितस्य, ते हि तदासेवामवलोक्यानिपरिणामकत्वाभ्यामतिप्रसंगं धर्मभ्रंशं वा लजेरन्निति गाथार्थः ॥ १७ ॥ अधुना बहुविषयोत्सर्गापवादपरिज्ञानतः कृत्योपदेशमाह—

॥ मूलम् ॥—बहुविहरसुस्सग्गं । बहुविहुविहमववायविहरणं ॥ णाउं लंघेउ णुत्तविहिं । बहुगुणजुत्तं करेज्जाहि ॥ १८ ॥ व्याख्या—पूर्वार्द्धं सुगमं, नवरं ज्ञात्वा निशीथादिग्रंथेभ्यः, लंघयित्वा विगात्वाल्पबहुगुणत्वे तुलयित्वेति यावत्. उत्तविधिमुत्सारककल्पाभिहितन्यायं बहुगुणयुक्तं प्र-

मूलगुणसंपन्नं कुर्याः, कृत्यमिति गम्यते, अत एवोक्तमागमे—जावज्जीवं गुरुणो । सुद्धमसुद्धेण हो-इ नायव्वं ॥ वसहे बारसवीसा । अठारस भिक्खुणो मासा ॥ १ ॥ इति गाथार्थः ॥ १८ ॥ उक्तः सप्रसंगपिंडविचारः, संप्रति शय्याशुद्धिमाह—

॥ मूलम् ॥—मूलोत्तरगुणसुद्धं । थीपसुपंडगविवज्जियं वसहिं ॥ सेविज्ज सव्वकालं । विवज्जए हुंति दोसाउ ॥ १९ ॥ व्याख्या—गुणशब्दस्य प्रत्येकमभिसंबंधान्मूलगुणोत्तरगुणशुद्धां स्त्रीपशुपंडकविवर्जितां वसतिं सर्वकालं सेवस्व, विपर्यये पुनर्भवंति दोषा इति संक्षेपार्थः ॥ १९ ॥ तत्र मूलगुणाः—

॥ मूलम् ॥—सट्ठीवंसो दोधार—णाउ चत्तारि मूलवेलीउ ॥ मूलगुणे हुववेया । एसा उ अहागडा वसही ॥ २० ॥ व्याख्या—तत्र पष्टिवंशो मोभ इति लोके यः प्रतीतः, द्वे धारणौ यत्र प्रतिष्ठितौ, असावेव, चतस्रो मूलवेलयश्चतुःषु कोणेषु निधीयंते, एते सप्तापि मूलगुणास्तैश्च साधुमाधाय कृतैरुपेता युक्ता एषा, तुशब्द एवकारार्थः, आधाय कृता आधाकर्मिक्येव वसतिरिति. उत्तरगुणाश्च द्विविधाः,-मूलोत्तरगुणा उत्तरोत्तरगुणाश्च, तत्र मूलोत्तरगुणाः—वंसग १ कडण २ कं

वण ३ । गायण ४ लेवण ५ डुआर ६ भूमीए ७ ॥ सपरिकम्मा वसही । एसा मूलोत्तरगुणेसु ॥ १ ॥ अत्र वृद्धसंप्रदाय.—वंसगत्ति दंडका., कडणंति कटादिभि. कुड्यकरणं, उक्कंबणंति दंडकोपरि छम्पयणमिति प्रतीतं, गायणं दर्भादिभिराछादनं. लेवणंति विक्कलेण कुड्डाणलिपणं, डुवारत्ति गृहद्वारस्य बाहुल्यकरणमन्यस्य वा विधानं, भूमित्ति भूमिकर्म. विसमाए विसमीकरणंति वुत्तं होइ. एसा परिकम्मा वसही मूलोत्तरगुणेसुत्ति मूलोत्तरगुणेष्वित्यर्थः.

एते च पृष्टिवंशादयश्चतुर्दशाप्यविशोधिकोटि, अमी पुनरुत्तरोत्तरगुणा विशोधिकोटिस्थिता वसतेरुपघातकरास्तद्यथा—दूमिय धूवियवासिय । उज्जोवियबलिकडाअवत्ताय ॥ सित्तासम्मट्ठाविय । विसोहिकोडिं गया वसही ॥ १ ॥ अत्रापि वृद्धव्याख्या—डुमियमित्ति उल्लाइया सेढिकादिभि. संमृष्टेत्युक्तं भवति. धूवियत्ति दुर्गंधत्वादगुरुप्रभृतिभि वासियत्ति वासिता. पुटवासकुसुमादिभि:, उद्योतिता रत्नप्रदीपादिभि. प्रकाशिता. बलिकडत्ति कूरकूरादिबलिविधाना, अवत्तत्ति छगणमृत्तिकाभ्यां जलेन चोपलिप्तभूमितला. सित्ता केवलोदकेनाछिन्ना संमृष्टा प्रमार्जिता, साध्वर्थायेति सर्वत्र प्रक्रम.. विशोधिकोटि गयत्ति अविशुद्धकोटौ न भवतीत्यर्थ इति. एतदनुसारतश्चतु शालादिष्वपि मू-

लोत्तरगुणविभागो भावनीयः, साक्षात्तदक्षणं तु प्रायेण यतीनां ग्रामेषु विहारः, तेषु चैवंविधवसते
रसंभवादिति. अन्ये चामी वसतिदोषाः—
कालाइक्कंतु १ वठाणा २ । अभिकंत ३ अणभिकंताय ४ ॥ वज्जाय ५ महावज्जाय
६ । सावज्ज ७ मह ८ अप्पकिरिया य ए ॥ १ ॥ मासे चतुर्मासे वा पूर्णे तत्रैव वसतां
कालातिक्रांतता, मासकल्पे वर्षाकल्पे वा पूर्णेऽन्यत्र विहृत्य द्वावष्टौ च मासान् पूरयित्वा तस्यामेव
गछतामुपस्थापना भवति, यावदर्थिकार्थं निष्पन्नान्यैश्चरकादिपाखंडिभिर्गृहस्थैर्वा निषेवितातिक्रांता,
तदनासेविता त्वनतिक्रांतेतिः आत्मार्थं कृतां साधुभ्यो दत्वा स्वयमन्यां कुर्वतो वर्ज्या. यदाह—
अत्तठकम्मं दाउं । जईणमन्नं करेइ वज्जा उ ॥ जम्हा तं पुव्वकम्मं । वज्जेइ तउ भवे व-
ज्जा ॥ १ ॥ तथा श्रमणब्राह्मणादीनां पाखंडिकानामर्थाय कृता महावर्ज्या, निर्ग्रंथादीनां तु पंचानां
श्रमणानामर्थाय कृता सावद्या, जैनमुनीनामर्थाय कृता महासावद्या, आह च—पासंडकारणा ख-
लु । आरंभो अहिणवो महावज्जा ॥ समणठा सावज्जा । महसावज्जा य साहूणं ॥ १ ॥ इमेऽष्टौ
दोषाः. या तु समस्तोक्तदोषवर्जिता स्वार्थं जिनबिंबप्रतिष्ठार्थं वा कारिता साल्पक्रिया शुद्धेत्यर्थः, अ-

यं तु दोषपद्धतिपठितोऽपि गुणोऽल्पशब्दस्याभाववाचकत्वादिति. तथा स्त्रीवर्जिता यत्र स्त्रियो मिथ कथादिभिः स्थानं न विदधति, यस्यां च स्थिते स्त्रीणां ध्वनिर्न श्रूयते, ता अपि साधुमधुरस्वाध्यायध्वनिं नाकर्णयंतीति अत्र गाथा—थीवज्जियं वियाणह । इत्थीणं जत्थ ठाणरूवाइं ॥ सद्दा य न सुयंति । तावि य तेसि न पेच्छंति ॥ १ ॥ ताणं चेट्ठंति जहिं । मिहो कहाईहिं नवरमित्थी उ ॥ वोए नियमारूवं । सिय सद्दो जेण तो वज्जे ॥ २ ॥ विप्रकृष्टे कदाचिच्छब्दो न स्यादपीति स्यादित्युक्तं—

चंकम्मियं ठिइ मोट्टि—यं च विपिक्खियं च सविलास ॥ सिंगारे य बहुविहे । दट्ठुं गत्तेयरे दोसा ॥ ३ ॥ मोट्टियंति केलिकलांचितमित्यर्थः, गुत्तेयरत्ति गुप्तागुप्तभागयोर्दोषा. स्मृतिकुतूहलादयः, जक्खमल्लपंकियाणवि । लावण्णसिरी उ जहसि देहाणं ॥ सामण्णेवि सुरूवा । सयगुणिया असि गिहवासे ॥ ४ ॥ गीयाणि य पढियाणि य । हसियाणि य मंजुले य उल्लावे॥ भूसणसद्दे राह—स्सिए य सोऊण जे दोसा ॥ ५ ॥ गंभीरमहुरफुडविसय—गाहगो सुस्सरोसरोजहसिं ॥ सप्रायस्स मणहारा—गेयस्सणु केरिसो होज्जत्ति ॥ ६ ॥ तथा पशुवर्जिता गोगर्दभीवमत्वादिपशुस्त्री-

तत्पुरुषरहिता, तथा पंडकवर्जिता नपुंसकरहिता, विपर्यये दोषा दूषणानि, ते च व्यक्ता एव. तत्र मूलोत्तरगुणादशुद्धायामाधाकर्मादयः, स्त्रीसहितायां तु ब्रह्मव्रतागुप्त्यादयः, यदाह—

बंभवयस्स अगुत्ती । लज्जाणासो य पीइवुड्ढी य ॥ साहु तवोवणवासो । निवारणं तित्थहाणी य ॥ १ ॥ लज्जानाशोऽसकृत्परस्परदर्शनेन, प्रीतिवृद्धिश्च नित्यमालापविश्रंभकथादिसंभवात्, साधुतपो वनवास इति लोके तीर्थहानिर्लोकाप्रवृत्तितः, इति पशुपंडकसहितायामपि चित्तक्षोभाभिघातादयः, अभ्यधायि च—पसुपंडगेसु विइहं—मोहानलदीवीयाण जं होइ ॥ पायमसुहा पवित्ती । पुव्वब्भासत्तं तहया ॥ १ ॥ अज्ञादयश्च दोषाः सर्वत्रापि समा एव, तस्मादुक्तदोषवर्जितैव वसतिरासेव्या, यदाह—तम्हा जहुत्तदोसेहिं । वज्जियं निम्ममो निरासंसो ॥ वसहिं सेविज्ज जई । विवज्जएयाणईणित्ति ॥ १ ॥ इति गाथार्थः ॥ १९ ॥ अथ क्रमप्राप्तां वस्तुशुद्धिमाह—

॥ मूलम् ॥—जं न तयट्ठा कीयं । ने य वूहं गहियमन्नेणं ॥ आहडपामिच्चं व—ज्जिऊण तं कप्पए वत्थं ॥ २० ॥ व्याख्या—यन्न तदर्थं प्रस्तावात्साधुनिमित्तं क्रीतं मूल्येन गृहितं, नैव व्यूतमातानवितानादितंतुक्रियया निर्वर्तितं, नैव गृहीतमन्येन वस्त्वंतरेण परिवृत्येत्यर्थः, पंचम्यर्थे वा तृती-

या, ततश्चान्यस्माद्भृत्यादेराछिद्येत्यर्थः, साध्वर्थमितीहापि गम्यं, तद्वस्त्रं कल्पत इति योगः, प्रस्तावाद्व्रतिनां किंकृत्वा? वर्जयित्वा. किं? आहृतमामित्यं विशेषणोभयपदकर्मधारयश्चात्र, इह च पिंडवदुद्गमोत्पादनैषणादयोऽपि दोषा यथासंभवमवसेयाः. यत्तु क्रीतादिदोषभणनं तद्बाहुल्येनामीषां संभवात्.

इह मूलोत्तरगुणविभागश्चैवं—तणविणणसंजयठा । मूलगुणा उत्तरा य पाणसयणत्ति ॥ पूर्वार्धं, अस्य व्याख्या—तननवितननादयो मूलगुणा अविशोधिकोटिः, पानसज्जनादयश्चोत्तरगुणा विशोधिकोटिरिति. अत्र तानवितानयोरसावद्यत्वादुत्तरगुणत्वं पानसज्जनयोश्च सावद्यत्वान्मूलगुणत्वं युक्तमिति परः, आचार्य आह—अत्तट्ठियतंतूहिं । समणठ तउ अपाइयतुउं य ॥ किं सो न होइ कम्मं । फासूणवि पज्जिउं जो उ ॥ १ ॥ फासूणवित्ति स्वार्थविहितेनापीत्यर्थः. जइपज्जणं तु कम्मं । इयरमकम्मं सकप्पउ धोउ ॥ अह धोउवि न कप्पइ । तणणं विणणं च तो कम्मत्ति ॥ १ ॥ इदं मूलोत्तरगुणशुद्धमौर्णिककार्पासिकादिभेदभिन्नं यद्वस्त्रं दायकेनोपढौकितं भवति, तद् द्वयोरप्यंतयोर्गृहीत्वा सर्वतो निरीक्षणीयं, मा तत्र गृहिणां मणिर्वा सुवर्णं वान्यद्वा रूपकादिद्रव्यं निबद्धं स्यात्, ततः सोऽपि गृहस्थो भण्यते निरीक्षस्व एतद्वस्त्रं सर्वतः, एवं च तेन यदि म-

एयादि दृष्टं ततो लष्टं, अथ न पश्यति ततः साधुरेव दर्शयति एनमपनयेति. आह—गृहिणः कथिते कथमधिकरणं न भवति? उच्यते—कथिते स्तोकतर एव दोष, अकथिते तूड्डाहादिर्महान् दोष इति. तथा—नवभागकप्पणाए । पढमं वत्थं करित्त जोयंति ॥ णाऊण फलविसेसं । गिण्हंति अहव वज्जंति ॥ १ ॥ चत्तारि देविया भागा । दुवे भागा य माणुसा ॥ आसुरा य दुवे भागा । मझे वत्थस्स रक्कसो ॥ २ ॥ अंजणखंजणकद्दमलित्ते । मूसगभक्खिय अग्गिविदड्ढे ॥ तुणिय कोट्टिय पज्जवलीढे । होइ विवागो असुहो सुहो वा ॥ ३ ॥ देवेसु उत्तमो लाभो । माणुसेसु य मझिमो ॥ आसुरेसु य गेलन्नं । मझे मरणमाइसे ॥ ४ ॥ इति सप्रसंग इति गाथार्थः ॥ २० ॥ अथ पात्रशुद्धिमाह—

॥ मूलम् ॥—तुंबयदारुमट्टिय—पत्तं कम्माइदोसपरिमुक्कं ॥ उत्तममज्झजहणं । जईण भणियं जिणवरेहिं ॥ २१ ॥ व्याख्या—तुंबकमलाबुः, दारुकं काष्टं, मृत्तिका पृथ्वीविशेषः, एतेषां द्वंद्वः, तासां पात्रं भिक्षाभाजनं, किंविशिष्टं? कर्मादिदोषपरिमुक्तं, सूचकत्वात्सूत्रस्य, आधाकर्मादिदूषणजालविकलं, यतीनां भणितं जिनवरैस्तीर्थंकृद्भिः, एतदेकैकं किंविशिष्टमित्याह—उत्तममध्यम

जघन्यं, तत्रोत्तमं पतद्ग्रहः. मध्यममात्रं जघन्यमोलंककादि. अन्ये पुनस्तुंबकमयादीनां यथासंख्य मुत्तमादिविनागं कल्पयंति. पुनरेकैकं यथा कृताल्पकर्मपरिकर्मसपरिकर्मरूपतया त्रिधावसेयं. इह च पूर्वपूर्वस्यालाभे उत्तरस्योत्तरस्य ग्रहणं विधेयं. मूलोत्तरगुणविनागश्च तुंबकमाश्रित्येवं—मुहुकरणं मूलगुणा—पाए निक्कोरणं तु इयरेउं ॥ इति गाथादलं सुगममेव. दारुमयादिषु तु स्वयमभ्युह्यः. तच्च गृह्णन्नमुं विधिं प्रयुंक्ते—

दाहिणकरेण कोणे । घेतुत्ताणेण वाममणिबंधं ॥ खोडेइ तिन्नि वारे । तिन्नि तले तिन्नि नूमीए ॥ १ ॥ ततश्च—ते सबीयाइं दहुं । न गेण्हइ गेण्हई य अदिठे ॥ गहणंमि उ परिसुद्धे । कप्पइ दिठेहिं विवज्जाहि ॥ १ ॥ उत्तरार्धस्यायं नावार्थः—ग्रहणकाले परिशुद्धे पश्चाद्यदि बहून्यपि बीजानि पश्यति तथापि गृह्णात्येव, न परिष्ठापयति प्रत्यर्पयति वा, किंतु यतनया तान्येव स्फेटयति यत्र न विराध्यंते तत्र च क्षिपतीति गाथार्थः ॥ २१ ॥ चतुष्टयशुद्धिमधुनोपसंहरन्नेतामनुतिष्ठन्नेव साधुर्नवतीत्याह—

॥ मूलम् ॥–एसा चउक्कसोही । निद्दिठा जिणवरेहिं सव्वेहिं ॥ एयं जहसत्तीए । कुणमाणो

भणए साहू ॥ २२ ॥ व्याख्या—व्यक्तार्था, नवरं सर्वैरिति समस्तक्षेत्रकालभाविभिः, अनेन सकल
सर्ववित्सम्मतत्वेन व्रततत्वमसावेवेत्यावेदयति. यथाशक्तीत्यनेन तु क्वचित्कारणमाश्रित्याशोधयत्यपि
शुद्ध इति सूचयतीति ॥ २२ ॥ यदनुष्ठायी यतिस्तदुक्तमधुना यथा न भवति तथाह—
॥ मूलम् ॥—उद्दिठकम्मं भुंजइ । छकायपमद्दणो घरं कुणइ ॥ पच्चक्खं च जलगए । जो
पियइ कहन्नु सो साहू ॥ २३ ॥ जे संकलिठचित्ता । मायठ्ठाणंमि निच्चं तल्लिच्छा ॥ आजीवगभय-
घच्छा । मूढा नो साहुणो हुंति ॥ २४ ॥ व्याख्या—उद्दिष्टमुद्देशः साध्वपेक्षा, तेन कृतमुद्दिष्टमाधा-
कर्मादि, तद्भुंक्तेऽभ्यवहरति आकुट्टिकया, तथा षट्कायमर्दनो यत्र क्वचन पृथिव्याद्युपमर्दको गृहं
करोति, संभवत्येव एषणीयालये मूर्छया वसतिं नाटकगृहं वा देवादिव्याजतो वा. तथा प्रत्यक्षं चो-
पलभ्यमान एव जलगतांस्तोयाश्रितानाप्कायिकादीन् यः पिबत्युपजीवत्याकुट्टिकया, कथं नु स साधु-
नैव भावयतिरिति ॥ २३ ॥ तथा ये केचन बहुश्रुता अपि संक्लिष्टचित्तास्तीव्ररागद्वेषोपहतचेतसो गु-
णेष्वपि मत्सरिणः क्वचिद्दोषेऽप्यनुरागिणो मातृस्थाने बहिस्तत्तत्क्रियानेपथ्यभाषणादिके परवंचने
नित्यं सर्वकालं तस्मिन्नेव परवंचने लिप्सवो बह्वतिसंधयः, आजीविकाभयग्रस्ता वृत्तिव्यवच्छेदभीरवो,

ह्रस्वत्वं प्राकृतत्वात्, अत एव मूढाः प्रबलमोहवशवर्तिनो नो नैव साधवो भवंतीति गाथाद्वयार्थः ॥ २४ ॥ साध्वसाधुस्वरूपमभिहितमधुना पुनः साधुतत्वं प्रतिपादयन्नुपदेशमाह—

॥ मूलम् ॥—सीलंगाण सहस्सा । अठारस जे जिणेहिं पन्नत्ता ॥ जो ते धरेइ सम्मं । गुरुबुद्धी तम्मि कायव्वा ॥ २५ ॥ व्याख्या—अक्षरार्थः सुगमो, नवरं, शील्यतेऽभ्यस्यते विधिप्रतिषेधरूपतयेति शीलं चारित्रं, तस्यांगान्यंशास्तत्समुदायरूपत्वात्तस्य, तेषां सहस्राण्यष्टादश, कथं पुनरेकविधस्य शीलस्यांगानामष्टादशसहस्राणि? उच्यते—जोगे करणे सन्ना । इंदिय भोम्माइ समणधम्मे य ॥ सीलंगसहस्साणं । अठ्ठारसगस्स निप्पत्ती ॥ १ ॥ व्याख्या—योगः करणकारणानुमतिरूपस्त्रिधा, तस्मिन् विषयभूते करणं मनोवाक्कायरूपं त्रिधा, तत्र संज्ञादीनि चत्वारि पदानि दर्शयंति, तत्र संज्ञा आहारभयमैथुनपरिग्रहस्वरूपाश्चतस्रः, तासु इंद्रियाणि श्रोत्रचक्षुर्घ्राणरसनस्पर्शनलक्षणानि पंच, तेषु भूमिरादिर्यस्य गणस्य भूम्यादिः, पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपंचेंद्रियजीवरूपो दशपदस्तपोदशपदस्तत्र श्रमणधर्मः क्षांतिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिंचन्यब्रह्मरूपो दशविधः, तस्मिंश्च शीलांगसहस्राणामष्टादशकस्य निष्पत्तिः, तथाहि—न हंति मनसा

आहारसंज्ञासंवृतः श्रोत्रेंद्रियसंवरणः पृथिवीजीवान् क्षांतिसंपन्नः, इत्येकं शीलांगं, एवं मार्दवादिपदयोगेनापि पृथिवीकायाभिलापेन दश शीलांगविकल्पाः स्युः. एवमप्कायाद्यभिलापैरपि दशदश मीलितं जातं शतं, एतच्च श्रोत्रेंद्रियेण लब्धं, एवं प्रत्येकं चक्षुरादिभिरपि, जातानि पंच शतानि, एतानि आहारपदेन गुण्यमानेन लब्धानि, एवं भयादिसंज्ञाक्रांताभिरपि जाते द्वे सहस्रे, एतावच्च मनसा लब्धं, एवं वाक्कायाभ्यामपि, जातानि षट् सहस्राणि, एतानि स्वयं करणेन, एवं कारणानुमतिभ्यामपि, प्रत्येकं षट्षट् सहस्राणि, सर्वमीलने जातान्यष्टादशसहस्राणि स्यु, यदा तु द्व्यादिसंयोगजन्या इह क्षिप्यंते भेदास्तदा बहवोऽपि स्युः, तथाहि—

एकद्व्यादिसंयोगेन योगेषु सप्त विकल्पाः, एवं करणेषु संज्ञासु पंचदश, इंद्रियेष्वेकात्रिंशत्, भूम्यादिषु त्रयोविंशत्यधिकसहस्रं, एवं क्षमादिष्वपि, इत्येषां च परस्पराभ्यासे द्वे कोटीसहस्रे, त्रीणि कोटीशतानि, चतुरशीतिकोटीनामेकपंचाशल्लक्षाणि, त्रिषष्टिसहस्राणि, द्वे शते, पंचषष्टिश्चेति, अंकतोऽपि २३८४५१६३२६५. ततः किमष्टादशैव सहस्राण्युक्तानि? उच्यते—यदि श्रावकधर्मवदन्यतरभंगकेन सर्वविरतिप्रतिपत्तिः स्यात्तदा युज्येत तद्गणनं, न चैवमेकतरस्यापि, शीलांगभंगकस्य शे

षसद्भाव एव भावात्, अन्यथा सर्वविरतिरेव न स्यात्, अभ्यधायि च—इह इमं विन्नेयं। अईयं प ज्जंतु बुद्धिमंतेहिं ॥ एक्कंपि सुपरिसुद्धं । सीलंगं सेससब्भावे ॥ १ ॥ तथा—एको वायपएसो-ऽसंखेयपएसो संगओ जहओ ॥ एयंपि नहा नेयं । सतत्तचाओ इह रहाओ ॥ १ ॥ इति गाथार्थः ॥ २५ ॥ अत एव च—

॥ मूलम् ॥—ऊणत्तं न कयाइवि । माणसंखं इमं तु अहिगिच्च ॥ जं एयधरा सुत्ते । निद्दिठा वंदणिज्जा उ ॥ २६ ॥ व्याख्या—ऊनत्वमेकादिभिर्हीनत्वं नैव कदाचिदपि दुःषमादावपि एतेषां शीलांगानां संख्यां परिमाणमिमामेतामष्टादशसहस्रलक्षणां, तुरेवकारार्थो योजित एव, अधिकृत्याश्रित्य, कुत एतदित्याह—यद्यस्मादेतद्धरास्तु अष्टादशशीलांगसहस्रधारिण एव सूत्रे प्रतिक्रमणाख्ये निर्दिष्टा उक्ता वंदनीया नमस्कारार्हाः, नान्ये 'अठारससहस्ससीलंगरहस्सधरा' इत्यादिवचनप्रामाण्यादयमपि, तुशब्द एवकारार्थः प्राग्योजितश्चेति गाथार्थः ॥ २६ ॥ उक्तमेवार्थं किंचिद्विशिष्टमाह—

॥ मूलम् ॥—पंचविहायाररओ । अठारससहस्सगुणगणोवेओ ॥ एस गुरू मह सुंदर । अ

णिउं कम्मट्ठमहणेहिं ॥ २७ ॥ व्याख्या—पंचविधः पंचप्रकार आचारो व्यवहारः, स च ज्ञानदर्शनचारित्रतपोवीर्यविषयः, तत्र रतः सक्तः स्वयमासेवनतोऽन्योपदेशतश्च. प्रागभिहितशीलांगलक्षणाष्टादशसहस्रगुणगणोपेतः, एवंविशिष्टे गुरौ जातहर्षः शिष्यंप्रत्याह ग्रंथकारः, हे सुंदर गुणानुरागप्रधान एष गुरुर्मम भणितः कर्माष्टमथनैर्जिनैः, इह विशेषणपरनिपातः प्राकृतत्वादिति गाथार्थः ॥ ॥ २७ ॥ तदियता सामान्येन साधुस्वरूपमुपवर्ण्य सांप्रतं विचित्रषट्त्रिंशिकाभिराचार्यगुणाभिधित्सया गाथकदंबकमाह—

॥ मूलम् ॥—अठविहागणिसंपय । चउग्गुणा णवरि हुंति बत्तीसं ॥ विणउ य चउप्भेउ । छत्तीसगुणा इमे तस्स ॥ २८ ॥ व्याख्या —गणः समुदायो गुणानां साधूनां वा यस्यास्ति स गणी, अतिशायी वाचार्यस्तस्य संपत्समृद्धिर्भावरूपा गणिसंपत् अष्टविधाष्टप्रकारा, आचारश्रुतशरीरवचनवाचनामतिप्रयोगमतिसंग्रहपरिज्ञाभेदात्, नवरं केवलं चतुर्गुणाः प्रतिभेदं चतुर्भिराहता द्वात्रिंशद्भवंति सूरिगुणा इति योगः. तत्राचरणमाचारोऽनुष्ठानं, स एव संपद्विभूतिस्तस्य वा संपत्संपत्तिराचारसंपत्, सा चतुर्धा, तद्यथा—

संयमध्रुवयोगयुक्तता चरणे नित्यं समाध्युपयुक्ततेत्यर्थः १. असंप्रग्रह आत्मनो जात्याद्युत्सेकरूपग्रहवर्जनमिति भावः २. अनियतवृत्तिरनियतविहार इत्यर्थः ३. वृद्धशीलता वपुर्मनसोर्निर्विकारतेति यावदिति ४. एवं श्रुतसंपत् सापि चतुर्धा, तद्यथा—बहुश्रुतता युगप्रधानागमतेत्यर्थः १. परिचितसूत्रता उत्क्रमक्रमवाचनादिभिः स्थिरसूत्रता २. विचित्रसूत्रता स्वसमयादिभेदात् ३. घोषविशुद्धिकरणता उदात्तादिविज्ञानादिति ४. शरीरसंपच्चतुर्धा, तद्यथा—आरोहपरिणाहयुक्तता, उचितदैर्घ्यादिविस्तरतेत्यर्थः १. अनपत्रप्यता, अलज्जनीयांगतेत्यर्थः २. परिपूर्णेंद्रियता, अनुपहतचक्षुरादिकरणता ३. स्थिरसंहननता, तपःप्रभृतिषु शक्तियुक्ततेति ४. वचनसंपच्चतुर्धा, तद्यथा—

आदेयवचनता १. मधुरवचनता, सरसवाक्यता २. अनिःसृतवचनता. गद्यस्थवचनतेत्यर्थ. ३. असंदिग्धवचनता, परिस्फुटवचनतेत्यर्थः ४. वाचनासंपच्चतुर्धा, तद्यथा—विदित्वोद्देशनं, परिणामिकादिकं शिष्यं ज्ञात्वेत्यर्थः १. विदित्वा समुद्देशनं २. परिनिर्वाप्यवाचना, पूर्वदत्तालापकानधिगमय्य, शिष्यं पुनः सूत्रदानं ३. अर्थनिर्यापणा, अर्थस्यपूर्वापरसांगत्येन गमनिकेति ४ मतिसंपच्चतुर्धा, तद्यथा—अवग्रह १। ईहा २। अपाय ३ धारणा ४ भेदादिति. प्रयोगमतिसंपच्चतुर्धा, तद्यथा—इह

प्रयोगो वादमुद्रा, तत्रात्मपरिज्ञानं वादादिसामर्थ्यविषये १. पुरुषपरिज्ञानं, किं नयोऽयं वादादि २. क्षेत्रपरिज्ञानं किमिदं मायाबहुलमन्यथा वा, साधुभिर्भावितमभावितं वेति विमर्शनं ३. वस्तुपरिज्ञानं, वस्तु वादकाले राजामात्यादिरिति ४. संग्रहपरिज्ञा, संग्रहः स्वीकरणं, तत्र परिज्ञा ज्ञानं, अष्टमीसंपच्चतुर्धा, तद्यथा—बालादियोग्यक्षेत्रविषया १. पीठफलकादिविषया २. यथासमयं स्वाध्याय भिक्षाविषया ३ यथोचितविनयादिविषया चेति ४. तथा विनयश्चतुर्भेदः, स च—आयारे सुयविणए । विक्खिवणे चेव होइ बोधव्वे ॥ दोसस्स य निग्घाए । विणए चउहे एस पडिवत्ति ॥१॥ इत्येतद्गाथातोऽवसेयः, तत्र आचारविनयः संयमतपोगणैकाकिविहारविषयचतुर्विधसामाचारीस्वरूपः, तत्र पृथ्वीकायरक्षादिसप्तदशपदेषु स्वयंकरणान्यकारणसीदत्स्थिरीकरणयतमानोपबृंहणात्मिका संयमसामाचारी १. पाक्षिकाष्टमीचतुर्दश्यादिषु द्वादशविधतपसि स्वपरयोर्व्यापाररूपा तपःसामाचारी २. प्रत्युपेक्षणादिषु बालग्लानादिषु वैयावृत्त्यादिषु च विषीदद्गणप्रवर्तनस्वयमुद्यमनस्वभावा गणसामाचारी ३. एकाकीविहारप्रतिमायाः स्वयमंगीकरणान्यांगीकारणलक्षणैकाकिविहारसामाचारीति ४. ॥१॥

श्रुतविनयः—सूत्रग्राहण १ अर्थश्रावण २ हित ३ निःशेषवाचनात्मकश्च ४, हितं योग्यतानु-

सारेण वाचयतो निःशेषमापरिसमाप्तेः, शेषं स्पष्टमिति ॥ २॥ विक्षेपणाविनयश्च—मिथ्यात्वविक्षेपणान्मिथ्यादृष्टेः स्वसमयस्थापनं १. सम्यग्दृष्टेस्त्वारंभविक्षेपेण चारित्राध्यासनं २. च्युतधर्मस्य धर्मे स्थापनं ३. प्रतिपन्नचारित्रस्य परस्यात्मनो वा अनेषणीयादिनिवारणेन हितार्थमभ्युत्थानं ४. इति चतुर्धा ॥ ३ ॥ तथा दोषनिर्घातविनयः—क्रुद्धस्य क्रोधापनयनं १. दुष्टस्य विषयादिदोषवतो दोषापनयनं २. कांक्षितस्य परसमयादिकांक्षावतः कांक्षाछेदः ३. स्वतश्चोक्तदोषविरहादात्मप्रणिधानं ४. इति स्वरूपः ॥ ४ ॥ एवं हि आत्मानं परं च विनयतीति विनयः, इति दिग्मात्रमिदं, विशेषस्तु व्यवहारभाष्यादवसेय इति. इमे मीलिताः षट्त्रिंशद्गुणास्तस्य गणिनो भवंतीति गाथार्थः ॥ २७ ॥ तथा—

॥ मूलम् ॥—वयछक्काई अट्ठार—सेव आयारवाइ अट्ठेव ॥ पायछित्तं दसहा । सूरिगुणा हुंति छत्तीसं ॥ २८ ॥ व्याख्या—व्रतषट्कादयोऽष्टादशैव वर्णितस्वरूपा, अमीषां चाचार्यगुणत्वमेतदपराधेषु सम्यक्प्रायश्चित्तपरिज्ञानतः, ज्ञातप्रत्ययस्य युक्तत्वादाचारवत्त्वादयोऽष्टावेव, ते चामी—आयारव १ मवहारव २ । ववहार ३ वीळ ४ पकुव्वीय ५ ॥ निज्जव ६ अवायदंसि ७ । अपरिस्सावी-

य बोधव्वो ॥ ८ ॥ अस्याश्चार्थः—आचारवान् ज्ञानसेवाभ्यां पंचप्रकाराचारयुक्तः, अयं हि गुणत्वेन श्रद्धेयवाक्यो भवति १. अवधार आलोचकोक्तापराधानामवधारणं, तद्वान्, स हि सर्वापराधेषु यथावच्छुद्धिदानसमर्थो भवति २. ववहारत्ति मतुप्लोपाद्व्यवहारवानागमश्रुताज्ञाधारधारणाजीतलक्षण पंचप्रकारव्यवहारान्यतरयुक्तः, स हि यथावच्छुद्धिकरणसमर्थो भवति ३. लज्जादिनातिचाराननालोचंतमुपदेशविशेषैरपव्रीडयतीति विगतलज्जं करोतीत्यपव्रीडकः, स ह्यालोचकनवोपकरणाग्रहणं सक्रोशयोजनात्परतो गमनवर्जनमित्यादिकः, मध्यमतीर्थेषु तु नैवं, यतः—

दोसा सइ मज्झिमगा । अच्छं ति उ जाव पुव्वकोडीवि ॥इहरा उ न मासंपिहु । एवं खु विदेहजिणकप्पी ॥ १ ॥ इह चैतेभ्य एव दशभ्यः पदेभ्यो मध्यादमीषु षट्सु पदेषु मध्यमतीर्थिकानां सततमासेवनादस्थितकल्पो ज्ञेयः, तथाहि—आचेलुक्कुद्देसिय । पडिक्कमेण रायपिंडमासेसु ॥ पज्जुसणाकप्पम्मि य । अट्ठियकप्पो मुणेयव्वो ॥१॥ शेषेषु चतुर्षु तेषामपि स्थित एव, भवितं चैतदिति कृतं प्रसंगेन. प्रकृतं प्रस्तूयते—द्वादश तपांसि तपोभेदाः प्रागभिहितस्वरूपाः, षडावश्यकानि सामायिकादीनि प्रतीतान्युभयत्र विभक्तिलोपः प्राकृतत्वात्, सूरिगुणा मीलिताः षट्त्रिंशद्भवंतीति

गाथार्थः ॥ ३० ॥ अथाचारादिसंपदः स्वयमाह—

॥ मूलम् ॥—आयारसुयसरीरे । वयणे वायणमईपओगमईए ॥ एएसु संपया खलु । अट्ठमि-
या संगहपरिणाए ॥ ३१ ॥ व्याख्या—एतदर्थश्च प्राग्व्याख्यात एव. ॥ ३१ ॥ तथा—

॥ मूलम् ॥—विगहा कसायसन्ना । पिंडो उवस्सग्गझाणसामईयं ॥ भासाधम्मो एए । च-
उगुणिया हुंति सूरिगुणा ॥ ३२ ॥ व्याख्या—विरुद्धा संयमबाधकत्वेन कथा वचनपद्धतिर्विकथा
स्त्रीकथादिः, तत्र स्त्रीसंबंधिनां जातिकुलरूपनेपथ्यानां प्रशंसा निंदा वा. तत्र जातिर्ब्राह्मणादिका, य-
था—धिग्ब्राह्मणीर्धवाभावे । या जीवंति मृता इव ॥ धन्या मन्ये जने शूद्रीः । पतिलक्षेऽप्यनिंदि-
ताः ॥ १ ॥ कुलमुग्रादि. यथा—अहो चौलुक्यपुत्रीणां । साहसं जगतोऽधिकं ॥ पत्युर्मृत्यौ विशंत्य-
ग्नौ । या. प्रेमरहिता अपि ॥ २ ॥ रूपं शरीरसंस्थानं. यथा—चंद्रवक्त्रा सरोजाक्षी । तुंगपीनघनस्त-
नी ॥ किं लाटी नो मता साम्य । देवानामपि दुर्लभा ॥ ३ ॥ नेपथ्यं कंचुकपरिधानादिनिवेशवि-
शेषरूपं. यथा—धिग्नारीरौदीच्या । बहुवसनाच्छादितांगलतिकत्वात् ॥ यद्यौवनं न यूनां । चक्षुर्मो-
दाय भवतीह ॥ ४ ॥ स्त्रीकथायां चैते दोषाः—आयपरमोहुदीरण । उड्डाहो सुत्तमाइपरिहाणी ॥

बंभवए य अगुत्ती । पसंगदोसा य गमणाई ॥ १ ॥ उन्निक्रमणादयः, भक्तकथा—आवापनिर्वापारंभनिष्ठानवर्णनस्वभावा, तत्र शाकघृतादीन्येतावंति तस्यां रसवत्यामुपयुज्यंत इत्यावापकथा, एतावंतस्तत्र पक्वापक्वान्नभेदा व्यंजनभेदा वेति निर्वापकथा, तित्तिरादीनामियतां तत्रोपयोग इत्यारंभकथा, एतावद् द्रविणं तत्रोपयुज्यत इति निष्ठानकथेति. उक्तं च—

सागघयादावावो । पक्कमपक्कं तु होइ निव्वाउ ॥ आरंभु तित्तिराइ । निट्ठाणं जा सय सहस्सं ॥ १ ॥ इह चामी दोषाः—आहारमंतरेण वि—गेही उज्जायए स इंगालं ॥ अजिइंदिय उदरिया । वाउ य अणुन्न दोसा य ॥ २ ॥ देशकथा छंदविधिविकल्पनेपथ्यविकथनस्वरूपा, तत्र छंदो गम्यागम्यविभागो, यथा—लाटदेशे मातुलभगिनी गम्या, अन्यात्रागम्येति. विधिर्यो यत्र देशे भोजनादिविरचना.. विकल्पो यो यत्र नदीकूपसारण्यादिभिः शस्यनिष्पत्तिप्रकारो, ग्रहदेवकुलनिवेशग्रामनगरादिविकल्पश्च. नेपथ्यं स्त्रीपुरुषाणां वेषः स्वाभाविको विभूषाप्रत्ययश्च, इह दोषाः—रागद्दोसुप्पत्ति । सपक्खपरपक्खउ य अहिगरणं ॥ बहुगुणइ मुत्तिदोसो । साउ गमणं च अणेसिंति ॥ ३ ॥ राजकथा नगरादिप्रवेशनिर्गमबलकोषप्रशंसनरूपा, यथा—सियसिंधुरखंधगउ । सियचम

रो सियछत्तछन्ननभो ॥ जणणयणकिरणसेउ । एसो पविसइ पुरे राया ॥१॥ इत्यादि, दोषाश्चात्र— चारियचारोभिमरे । हिय मरिय संकक्काउकामा वा ॥ वृत्तानुवृत्तोहाणे । ( वृक्तगोगो अवृक्त-गोगो वा अवधानं कुर्यात् ) करिज्जासे आसउ गंति ॥ ४ ॥ कष्यंते प्राणिनोऽस्मिन्निति कषा संसारस्तमयंते गछंत्येभिरसुमंत इति कषायाः, यदिवा कषाया इव कषायाः, यथाहि तुवरिकादिकषायकलुषिते वाससि मंजिष्टादिरागः श्लिष्यति चिरं वा अवतिष्टते, तथैतत कलुषितात्मनि कर्म संबध्यते चिरस्थितिकं च जायते तदायत्तत्वात् तत स्थितेः. ठिइ अणुभागं कसायउ कुणइ इति वचनात्. ते च क्रोधमानमायालोभाभिधानाः, तत्र क्रोधः मोहनीयोदयसंपाद्यो जीवस्य परिणतिविशेषः क्रोधः. एवं इतरेष्वपि ४. संज्ञानं संज्ञा चैतन्यं तच्चासातवेदनीयमोहनीयकर्मोदयजन्यविकारयुक्तमाहारसंज्ञादित्वेन व्यपदिश्यते. तत्राहारसंज्ञासा ;वेदनीयसमुत्थआहाराभिलाषः, भयसंज्ञा भयमोहनीयसंपाद्यो जीवपरिणामः. मैथुनसंज्ञा वेदोदयजनितो मैथुनाभिलाषः, परिग्रहसंज्ञा चारित्रमोहोदयकृतपरिग्रहाभिलाषः ४. पिंडः समयपरिभाषया आहारः, स चाशनपानखादिमस्वादिमरूपः, तद्विभागश्चैवं—असणं उयणसत्थुग । मुग्गजगाराइ खज्जगविहीया ॥ खिराइं सूरणाइं । मंडगप-

भिइ य विन्नेयं ॥ १ ॥ पाणं सो वीरजलं । दगाइ चित्तं सुराइयं चेव ॥ आउक्काउ सव्वो ।
कक्कडगजलाइयं च तहा ॥ २ ॥ भत्तोसदंताई । खज्जूरं नालिकेरदक्खाई ॥ चिप्पडिअंबगफण-
सा—इ बहुविहं खाइमं नेयं ॥ ३ ॥ दंतवणं तंबोलं । चित्तं तुलसी कुहेडगाइय ॥ महुपिंपलिसुं
ठाई । अणेगहा साइमं होइ ॥ ४ ॥ उपसृजंति प्रतिपन्नार्थत्यागतोऽप्रधानीभवंत्येभिरसुमंत इत्युप
सर्गाः, ते च दैव्यमानुषतैरश्चात्मसंवेदनीयरूपाः, तत्र दैव्या हास्यप्रद्वेषविमर्शपृथग्विमात्राप्रभवाः, पृ
थग्भिन्ना विविधा मात्रा हासादिवस्तुरूपाः पृथग्विमात्राः, तथा हासेन कृत्वा प्रद्वेषेण करोतीत्येवं सं-
योगाः कार्याः, हासादयस्तु सुज्ञाना एव १. मानुषा अपि हासप्रद्वेषविमर्शकुशीलप्रतिषेवणासमुत्थाः,
कुशीलमब्रह्म तस्य प्रतिषेवणं २. तैरश्चा आहारहेतुभयद्वेषापत्यलयनसंरक्षणोद्भवाः ३.

आत्मसंवेद्यास्तु घट्टनप्रपतनस्तंभनश्लेषणनिमित्ताः, तत्र घट्टनेन क्वचिच्चक्षुषि रजःप्रपाते सति तन्मलनेन, प्रपतनेन गर्तकीलादौ स्खलनाद्भूमौ निपतनेन, स्तंभनेन हस्तपादादेः स्वापात्स्तब्धत्वेन, श्लेषणेन करचरणादेराकुंचितस्य वातदोषात्तथैव लगनेन ४. ध्यानमंतर्मुहूर्तमेकवस्तुनि चित्तावस्थानं, तदार्तरौद्रधर्म्यशुक्लभेदभिन्नं, तत्र ऋतं दुःखं, तत्र भवमार्तमनिष्टेतरविषयवियोगशंसनादि-

चिंतारूपं १. रोदयत्यपरानिति रुद्रः, प्राणिवधादिपरिणत आत्मा, तस्येदं कर्म रौद्रं. हिंसाद्यतिनि स्तृंशताध्यवसानं २. धर्मः क्षांत्यादिलक्षणस्तस्मादनपेतं धर्म्यं सूत्रार्थाद्यनुचिंतनं ३. शुक्लं शुचि निर्मलं सकलं मिथ्यात्वादिमलापगमात्, यद्वा शुगिति दुःखमष्टप्रकारं वा कर्म, ततः शुचं क्लमयति निरस्यतीति शुक्लमर्थात् व्यंजने व्यंजनादर्थे योगाद्योगांतरे च संक्रामतः पूर्वगतश्रुतालंबनमेकद्रव्यगतोत्पादादिपर्यायेषु नानानयानुचिंतनमित्यादिकं ४. एतद्भेदस्वरूपं च सविस्तरं ध्यानशतकादवसेयं, इह तु नोच्यते ग्रंथविस्तरभयात्. सामायिकमिति, समो रागद्वेषरहित आत्मपरिणामस्तस्यायो लाभः समायस्तत्र भवं सामायिकं, तच्च सम्यक्त्वश्रुतदेशविरतिसर्वविरतिभेदभिन्नं ४. भाष्यत इति भाषा वचनं, सत्यासत्यमिश्रासत्यमृपास्वरूपा. तत्र सत्यास्त्यात्मेत्यादि १. असत्या नास्ति आत्मेत्यादि २. मिश्रा पुनरुभयरूपा, यथा विदित्वाप्यस्मिन्नगरे दश दारका जाता मृता वेत्याह ३. असत्यामृषामंत्रणादिका. यथा हे देवदत्त इत्यादि ४. धर्मः प्राग्वर्णितशब्दार्थो दानशीलतपोभावनामयः ४. एते विकथादयो नव पदार्थाश्चतुर्गुणा भावितनीत्या चतुराहता भवंति सूरिगुणाः षट्त्रिंशदिति भावः. इति गाथार्थः ॥ ३२ ॥ तथा—

॥ मूलम् ॥—पंचमहव्वयजुत्तो । पंचविहायारपालणुज्जुत्तो ॥ पंचसमिउ त्तिगुत्तो । छत्तीस गुणो गुरू होइ ॥ ३३ ॥ व्याख्या —सुगमा, नवरं पंचमहाव्रतानि, पंच आचाराः, पंच समितयस्तिस्रो गुप्तय इत्यष्टादशपदानि. अमीषां स्पर्शनपालनभेदद्वैविध्यात् षट्त्रिंशदेतावद्गुणो गुरुर्भवतीति. तत्र स्पर्शनं विधिना गुरोः पुरः प्रतिपत्तिः, पालनमुपयोगतः प्रतिजागरणं. इह च स्थितकल्पादीनां यथासंभवं सम्यगासेवनपरिज्ञानप्ररूपणपरिहारादभिः सूरिगुणत्वमवसेयमिति गाथार्थः, ॥ ३३ ॥ संप्रत्यनुयोगप्रवर्तनमाश्रित्य तस्यैव गुरोर्गुणषट्त्रिंशिकां विवक्षुर्गाथाचतुष्टयमाह—

॥ मूलम् ॥—देसकुलजाइरूवी । संघयणी धीइजुउ अणासंसी ॥ अविकहणो अमायी । थिरपरिवाडी गहियवक्को ॥ ३४ ॥ जियपरिसो जियनिद्दो । मज्झत्थो देसकालभावण्णू ॥ आसन्नलद्धपइभो । णाणाविहदेसभासण्णू ॥ ३५ ॥ पंचविहे आयारे । जुत्तो सुत्तत्थ तदुभयविहण्णू ॥ आहरणहेउकारण । नयनिउणो गाहणाकुसलो ॥ ३६ ॥ ससमयपरसमयविऊ । गंभीरो दित्तिमं सिवो सोमो ॥ गुणसयकलिउ जुत्तो । पवयणसारं परिकहेउं ॥ ३७ ॥ व्याख्या—देशकुलजातिरूपाण्यतिशायीनि विद्यंते यस्य स तथा, तत्र देशो मध्यदेशः सार्धपंचविंशतिजनपदरूपो वा, तद्

त्पन्नस्य हि वचनं शिष्याः सुखेनैवावगच्छंति १. कुलमीक्ष्वाकुप्रभृति २. जातिर्मातृसमुत्था, एतदुपेतो हि प्रतिपन्नार्थनिर्वाहको भवति यदुच्यते—अभिजातः प्रतिपन्नं । त्यजति न कृच्छ्रेऽपि महति संप्रासः ॥ पंकोपलादिविषमे—ऽप्युज्झति पथि किं धुरं धवलः ॥ १ ॥ ३. रूपमंगोपांगसंपूर्णता, तद्वानादेयवाक्यो भवति, तथाहि—' धम्मोदएण रूवं ' इत्यादि, सर्वगुणाश्रयश्च, यत्राकृतिस्तत्र गुणा वसंतीति कृत्वा ४. संहननी विशिष्टसंहननसंयुक्तः, स हि वाचनादिषु न श्राम्यति ५. धृतियुतः सर्वत्रानुकूलमनाः ६. आशंसत इत्येवं शील आशंसी. न तथा श्रोतृभ्योऽन्नवस्त्राद्याकांक्षावान् ७. अविकत्थनोऽबहुभाषी, अनात्मश्लाघापरो वा ८. मायी मायावान्, न तथाऽमायी, परिवाराद्यर्थमनुयोगार्थिनः शिष्यान्न शाठ्येन वाहयति ९. स्थिरा निश्चला प्रमादरहितत्वेन परिपाटि सूत्रार्थपरावर्तना यस्य वा स तथा १०. गृहीतं वाक्यं येन यस्य वा स तथा, अवधारणावानादेयवाक्यो वेति ११. ॥ ३४ ॥

तथा जितेव जिता, निःक्षोभत्वेन परिषत्सभा येन स तथा, स हि सदसि न मुह्यति १२. जितनिद्रस्तस्य हि जागरूकत्वेन सूत्रार्थौ न नश्यतः, लघु च शिष्यान् समयोदधेः पारं प्रापयति १३.

मध्यस्थो रागद्वेषरहितत्वेन शिष्येषु समचित्तः १४. देश· साधुभावितादि·, काल सुभिक्षिनादि, भाव: क्षायोपशमिकादिः, तान् जानातीति तद्ज्ञ·, स हि यथौचित्येन विहरति धर्मकथां च कुरुते १५. १६. १७. आसन्नाः प्रश्नानंतरमेव लब्धा प्रतिभोत्तरदाने बुद्धिर्येन स तथा प्रत्युत्पन्नमतिरित्यर्थः, स हि क्वचिद्वादिना पृष्टस्तत्कालं निर्णयदायित्वेन प्रवचनप्रभावको भवति १८. नानाविधदेशभाषाज्ञः, अयं हि नानादेशजविनेयावबोधको भवतीति १९. ॥ ३५ ॥

तथा पंचविधे आचारे ज्ञानादौ युक्त उद्युक्तः, स हि स्वयमुद्यतः शिष्यानुद्यमयति २४. 'सुत्तत्थतदुभयविऊ' सूत्रार्थतदुभयानां विविधान् भेदान् जानातीति, ततश्च सूत्रज्ञो हीनात्यक्षरादिदोषविद्, अर्थज्ञोऽविस्मृतशुद्धसंप्रदायः, तदुभयज्ञः सूत्रार्थकुशल, इह च तदुभयपदेनैव गतार्थत्वे सूत्रार्थपदोपादानेनैव चतुर्भंगीं सूचयति, तदुभयपदेन च तृतियभंगस्य ग्राह्यनामाह, एवंविध एव ह्यनुयोगयोग्यो भवति २५. उदाह्रियते प्रस्तुतहेत्वाश्रयदर्शनाय प्रयुज्यत इत्युदाहरणं दृष्टांतः, हिनोति गमयति विवक्षितमर्थमिति हेतुरन्वयव्यतिरेकलक्षणः, कारणं दृष्टांतादिरहितमुपपत्तिमात्रं, यथा निरुपमसुखसिद्धो ज्ञानानाबाधप्रकर्षात्, अन्यत्र हि निरुपमसुखासंभवान्नोदाहरणमस्ति, उक्तंच—

हेऊ अणुगमवइरेग—लक्कणो सव्ववत्थुपज्जाउ ॥ आहरणं दिठंतो । कारणमुववत्तिमेत्त
तु ॥ १ ॥ नया नैगम १ संग्रह २ व्यवहार ३ ऋजुसूत्र ४ शब्द ५ समभिरूढैवंभूताभिधानाः ६–७
सप्त, तेषु निपुणः कुशलः, अनीदृशो हि वचनमात्रेण न बोधयितुमलं २९, अत एव ग्राहणाकु-
शलः परप्रत्यायनसहः ३० ॥ ३६ ॥ तथा स्वसमयो जैनमतं, परसमयः शाक्यादिसिद्धांतस्तौ वेत्ती-
ति तद्विद्, स हि परवादिभिरजय्यो भवति. ३१, गंभीरोऽतुच्छाशयः ३२, दीप्तिमान् सप्रताप, ताह-
शो हि दुःप्रधृष्यः स्यात् ३३, विशिष्टतपोलब्ध्यादिभिः क्षेमकृत ३४, सोमोऽक्रोधन. ३५, पुन किं-
विशिष्टः? गुणानां मूलगुणादीनां शतानि, बहुत्वोपलक्षणं चैतत्, तैः कलित उपेत ३६. युक्तोऽ-
र्हः परिकथयितुं प्रवचनं द्वादशांगं तस्य सारोऽर्थस्तमिति गाथाचतुष्टयार्थ. ॥ ३७ ॥ अथ किमर्थ-
मिदं पुनः पुनर्गुरोर्गुणान्वेषणं क्रियत इत्याह—

॥ मूलम् ॥—वूढो गणहरसद्दो । गोयममाईहिं धीरपुरिसेहिं ॥ जो तं ठवइ अपत्ते । जा-
णंतो सो महापावो ॥ ३८ ॥ व्याख्या—व्यूढो धृतो गणधरशब्दो गणभृद् ध्वनिः, कैर्धिया राजंत
इति धीरास्ते च ते पुरुषाश्च तैः, किमादिभिर्गौतमादिभिः, मकारोऽलाक्षणिकः, इंद्रभूतिसुधर्मप्रभृ-

तिभिः. यश्च तं गणधरशब्दं स्वजनशिष्यादिव्यामोहात्स्थापयत्यारोपयति अपात्रेऽनर्हे पुरुषे जानन्, प्रस्तावादपात्रत्वमनेन छद्मस्थपरीक्षया परीक्षितस्य क्वचिदंगारमर्दकादाविव व्यभिचारेऽपि न दोषः, स महापापस्तत्कृततीर्थमालिन्याद्याचारस्य तन्मूलत्वात्, इह चैतदपि ज्ञातव्यं, यथा—एस पवत्तिणिसद्दो । जो वूढो अज्जचंदणाईहिं ॥ जो तं ठवइ अपत्ते । जाणंतो सो महापावो ॥ १ ॥ पात्रं पुनरियं—गीयत्था कयकरणा । कुलजा परिणामिया य गंभीरा ॥ चिरदिक्खिया य वुड्ढा । अज्जावि पवत्तिणी भणिया ॥ १ ॥ एवं च—तम्हा तित्थयराणं । आराहंतो जहो इय गुणेसु ॥ दिज्ज गणं गीयत्थो । नाऊण पवत्तिणिपयं च ॥ १ ॥ इति गाथार्थः ॥ ३८ ॥ अयोग्यस्थापनामाश्रित्य दोष उक्तः, संप्रति कुदेशनामाश्रित्य तमाह—

॥ मूलम् ॥—तिन्निवि रयणइं देइ गुरु सुपरिपक्खियइ न जस्सु । सीसहसीसु हरंतु जिह सो गुरु वइरि उ तस्सु ॥ सो गुरु वइरि उ तस्सु इत्थु संदेहु न किज्जइ । सीसह सीसु हरंतु जे वंनरु नरह भणिज्जइ ॥ सुपरिपक्खयइं न जस्सु सच्च संसउ मणिछिन्निवि । देइ सुदेव सुधम्म सुगुरुरयणइं तिन्निवि ॥ ३९ ॥ ( द्विभंगिकाछंदः ) सुगमं, नवरं, संसारचारकनिवाससंत्रस्तप्रा-

णप्राणमयमिति कृत्वा जंतुर्गुरुमाश्रितः, स च तेन कुदेशनया कुदेवादिषु देवत्वादिप्रतिपत्तिमुत्पादयता सुतरां तत्र निक्षिप्त इति विश्वस्तघातित्वेन शीर्षापहारिणा तुल्य इति भावः. तथा च—जह सरणमुवगयाणं इत्यादि ॥ ३९ ॥ अथ रत्नत्रयस्यैव स्वरूपमाह—

॥ मूलम् ॥—सो जि धम्मु सचराचरजीवहदयसहिउ । सो गुरु जो घरघरणिसुरयसंगमरहिउ ॥ इंदियविसयकसाइहिं देवु जु मुक्कमलु । एहु लेहु रयणत्तउ चिंतियदिन्नफलु ॥ ४० ॥ ( रासावलयछंदः ) व्याख्या—सुगमं, नवरं, सहचैर्वर्तते इति सहचराः, ते च तेऽचराश्च सचराचराः, अनेन यैर्हिंसयापि धर्मोऽवहितो यथा—यज्ञार्थं पशव सृष्टाः । स्वयमेव स्वयंभुवा ॥ यज्ञोऽस्य भूत्यै सर्वस्य । तस्माद्यज्ञे वधोऽवध ॥ १ ॥ औषध्यः पशवो वृक्षा—स्तिर्यंचः पक्षिणस्तथा ॥ यज्ञार्थं निधनं प्राप्ताः । प्राप्नुवंत्यमृतं पुनः ॥ २ ॥ इत्यादि तान् प्रतिक्षिपति, यतस्तैरेवोक्तं—सर्वे वेदा न तत्कुर्युः । सर्वे यज्ञाश्च पार्वति ॥ सर्वतीर्थाभिषेकश्च । यत्कुर्यात् प्राणिनां दया ॥ ३ ॥ इति. तथा सुरतसंगमवर्जनेनैव गृहिणीवर्जने सिद्धे यत्पुनस्तद्ग्रहणं तद्धर्मपत्न्या अपि परिहारार्थं, तथा च केचिदाहुः—क्रियाणां खलु धर्म्याणां । सत्पत्न्यो मूलसाधनं ॥ इति. ॥ ४० ॥ अथैतद्र-

त्वयं कथमवबुध्यत इत्याह—

॥ मूलम् ॥–देवं गुरुं च धम्मं च । भवसायरतारयं ॥ गुरुणा सप्पसन्नेण । जणो जाणइ णिच्छियं ॥ ४१ ॥ व्याख्या—पाठसिद्धः श्लोकः ॥ ४१ ॥ अथ प्रकारांतरेण पुनर्गुरोरेव स्वरूपमाह—

॥ मूलम् ॥—धम्मण्णू धम्मकत्ता य । सया धम्मपरायणो ॥ सत्ताणं धम्मसत्थ—देसत्तं भणए गुरू ॥ ४२ ॥ व्याख्या—धर्मः श्रुतचारित्रलक्षणः, तं जानातीति धर्मज्ञो युगप्रधानागम इत्यर्थः, अनेन ज्ञानमुक्तं, धर्मः क्षांत्यादिस्तस्य कर्तानुष्ठायी, अनेन क्रिया प्रतिपादिता, चकारो विशेषणसमुच्चये, तदनेन यदाहुः—किं मोक्षतरोर्बीजं? सम्यग्ज्ञानं क्रियासहितमिति तदाविर्भावितं, सदा सर्वकालं धर्मपरायणो, न तु दृष्टारमपेक्ष्य कदाचिदेव, तदियता स्वार्थ उक्तः, अथ तीर्थप्रवृत्त्यंगभूतं देशनारूपं परार्थमाह—सत्वानां धर्मशास्त्रार्थदेशको भण्यते गुरुः, अनेन कामशब्दादिशास्त्रांतरदेशित्वप्रतिषेधमाह, इति श्लोकार्थः ॥४२॥ तदेवं गुरुगुणग्राममुपवर्ण्य तस्यैव माहात्म्यमाह–

॥ मूलम् ॥—तं सुगुरुसुद्धदेसण–मंतक्खरकन्नजावमाहप्पं ॥ जं मिच्छविसपसुत्तावि । केइ पावंति सुहबोहं ॥ ४३ ॥ व्याख्या—तत् सुगुरुशुद्धदेशनैव मंत्राक्षराणि, तेषां कर्णजापस्तस्य माहा-

स्तु-
त्स्यं प्रभावो, यत्किं? यद्भावप्रधानत्वान्निर्देशस्य, मिथ्यात्वमेव सद्बोधप्रतिबंधसाधर्म्येण विषं तेन प्रसु-
प्ता इव प्रसुप्ताः प्रणष्टसंविदः, अपिः प्रकर्षद्योतने, केचिदासन्नसिद्धिकादयः प्राप्नुवंति शुभबोधमिति
गाथार्थः ॥ ४३ ॥ तथा—

॥ मूलम् ॥—सग्गापवग्गमग्गं । मग्गंताणं अमग्गलग्गाणं ॥ दुग्गे भवकंतारे । नराण
निहारया गुरुणो ॥ ४४ ॥ व्याख्या—स्वर्गापवर्गमार्गं मार्गयमाणानां, अथ च अमार्गलग्नानां दु-
र्गे भवकांतारे नराणां निस्तारका गुरवः, इति गाथार्थः ॥ ४४ ॥ अन्यच्च—

॥ मूलम् ॥—अन्नाणनिरंतरतिमिर—पूरपडिपूरियंमि भवभवणे ॥ को पयडेइ पयत्थे । ज-
इ गुरु दीवा न दिप्पंति ॥ ४५ ॥ व्याख्या—निगदसिद्धा. ॥४५॥ अथ मुग्धजनोचितमन्वयव्यति-
रेकतो गुरोर्लक्षणमाह—

॥ मूलम् ॥—अकरु अकइ किंपि न ईहइ । अन्नुवि भवसंसारह बीहइ ॥ संजमनियमि-
हेहि खणुवि न मुच्चइ । एह धम्मियसुहगुरु वुच्चइ ॥४६॥ छवीहजीवनिकाउ विराहइ । पंचवि इं-
दिय जो नवि साहइ ॥ कोहमाणमयमहरि जुत्तउ । सो गुरु नरयह नेइ निरुत्तउ ॥ ४७ ॥ व्या-

ख्या—अक्षरं धर्मप्रतिबद्धमाख्याति, तच्च कथयन् व्यासादिवन्नाकिंचिदीहते श्रोतृभ्यः, तस्यात्मना वञ्चितत्वेनाकल्यत्वात्, एतेन धर्मार्थिनैव देशना विधेयेति, अन्यच्च भवे चतुर्गतिके संसारे पर्यटनं तस्माद्विभेति, मा कचिदुत्सूत्रं भविष्यतीति. समिति सम्यग् यमा अहिंसादयो मूलगुणा इत्यर्थः, नियमाः शौचादय उत्तरगुणा इत्यर्थः. यदाह—

अहिंसासुनृतास्तेय—ब्रह्माकिंचनता यमाः ॥ नियमाः शौचं संतोषः । स्वाध्यायतपसी अपि ॥ १ ॥ देवताप्रणिधानं चैते तैः क्षणमपि न मुच्यते, ईदृशो हे धार्मिक शुभगुरुरुच्यत इति ॥ ॥ ४६ ॥ यस्तु षड्विधजीवनिकायं विराधयति हिनस्ति, पंचापि, आस्तामेकादिकं, इंद्रियाणि करणानि यो नैव साधयति जयति, अनिरुद्धाश्रवोऽसंवरश्चेत्यर्थः. क्रोधः कोपो, मानो दुरभिनिवेशः, मदो जात्याद्युत्सेकः, मत्सरः परगुणाद्यसहिष्णुता, तैर्युक्तो य इत्यत्रापि योगः, स गुरुरिव गुरुस्तदाभासत्वेन नरकं नयति श्रोतारमिति गम्यते, निरुक्तउक्ति लोकरूढ्या निश्चितः स्वक्रियानुरूपदेशित्वात्तस्येति वदनकद्वयार्थः ॥ ४७ ॥

अथ किमर्थमत्नीदृशमिह गुरोर्गुणोद्घोषणा? सत्यं, ऐहिकामुष्मिकसदनुष्ठानस्य सर्वस्यापि गु-

रुमूलत्वात्, अतस्तत्परीक्षातिरेकेण प्रवर्तमानस्य विप्रतारकमार्गदेशकवचनप्रवृत्तस्यैव मा भूद् दुरुत्तर-संसाराटवीविनिपातस्तद्गुणप्रतीतिश्च कस्यचित्कथंचिज्जायत इत्यनेकधा गुरुगुणव्यावर्णनमदुष्टमिति, ननु तथापि प्रथमदर्शन एव कथं तद्गुणावगम इत्याह—

॥ मूलम् ॥—आलयविहारभासा। चंकमणट्ठाणविणयकम्मेहिं ॥ सवन्नूभासिएहिं। जाणि-ज्जइ सुविहिओ साहू ॥ ४७ ॥ व्याख्या —आलय. सुप्रमार्जितादिलक्षण, स्त्रीपशुपंडकादिदोषरहितो वा उपाश्रय., विहारो मासकल्पादि. भाषा देशेन समुदायावगमाद्भाषासमितिः. चंकमणमीर्यो-पयुक्तस्य गमनक्रिया, अत्र चैकग्रहणे तज्जातीयग्रहणादखिलप्रवचनमातॄणां ग्रहणं मंतव्यं, स्थान-मूर्ध्वस्थानं निःश्रमप्रवेशादिप्रदेशवर्जितं, विनयकर्म विनयार्हेषूचितप्रतिपत्ति', अमीषां द्वंद्व. एतैः सर्वज्ञभाषितैस्तीर्थकृदुक्तैर्लिंगैरिति गम्यं, ज्ञायतेऽवगम्यते, सुष्ठु शोभनं विहितमनुष्ठानं यस्य स सुविहितः साधुर्यतिः, न चैवमप्यंगारमर्दकोदायिनृपमारकादिभिर्व्यभिचारः, प्रायशः संवादित्वात्, अ-न्यथा धूमादीनामप्यग्निज्ञानादौ सम्यग् हेतुत्वं न स्यात्, तेषामपि क्वचिद्विप्रतारकगोपालधूमभृतघटिकादौ व्यभिचारदर्शनात्, व्यवहारनयप्राधान्येनैव च छद्मस्थानां प्रवृत्तेरेव, एवं च यावत्तत्सद्भावो

न ज्ञायते तावत्तेषामपि बाह्यलिंगपरीक्षया प्रतिपत्तिः कर्मक्षयायैव. किं चातिशयज्ञानिनोऽपि पुरस्कुर्वंत्येव व्यवहारनयं, यदाह—ववहारोवि हु बलवं । जं छउमत्थंपि वंदइ अरिहा ॥ जो होइ अणाभिन्नो । जाणंतो धम्मयं एयं ॥ १ ॥ इति गाथार्थः ॥ ४८ ॥ अथेवंभूतस्य सुविहितस्य विचित्रचारित्रमोहनीयक्षयोपशमोपशमक्षयभेदतो नामान्याह—

॥ मूलम् ॥—पुलायणामो पढमो चरित्ती । बीउ बउस्सो तइउ कुसीलो ॥ चउत्थउ होइ नियंठनामो । सव्वुत्तमो पंचमउ सिणाउ ॥ ४९ ॥ व्याख्या—तत्र पुलाको निःसारशाल्यादिकणस्ततः पुलाकवत्पुलाकः, संयमसारापेक्षया च संयमवानपि मनाक् तमसारं कुर्वन् पुलाक इत्युच्यते. ततः पुलाक इति नाम यस्य तथा प्रथम आद्यश्चारित्री साधुरयं च द्विविधो लब्धिप्रतिषेवाभेदात्, तत्र लब्धिपुलाको लब्धिविशेषवान्, संघाइयाण कज्जे । चुत्तिज्जा चक्कवट्टिसेन्नंपि ॥ ताए लद्धीए जुउ । लद्धिपुलाउ मुणेयव्वो ॥ १ ॥

अन्ये त्वाहुरासेवनतो यो ज्ञानपुलाकस्तस्येयमीदृशी संज्ञा, स एव च लब्धिपुलाको न तद्व्यतिरिक्तः कश्चिदपर इति. प्रतिषेवापुलाकश्च पंचधा, ज्ञानदर्शनचरणलिंगयथासूक्ष्मभेदात्. तत्र

ज्ञानमाश्रित्य पुलाकस्तस्यासारताकारी विराधको ज्ञानपुलाकः, एवं दर्शनादिपुलाकोऽपि. आह
च—खलिआइदूसणेहिं । णाणं संकाइएहिं संमत्तं ॥ मूलोत्तरगुणपडिसे—वणाए चरणं वि
राहेइ ॥ १ ॥
लिंगपुलाउ अन्नं । निक्कारणाउ करेइ जो लिंगं ॥ मणसा अकप्पियाणं । निसेवउ होइ अ-
हासुहुमोत्ति ॥ २ ॥ द्वितीयो नामशब्दस्यात्रापि संबंधाद्बकुशनामा चारित्रीत्यत्रापि योगः, एवमुत्तर-
त्रापि. तत्र बकुशं शबलं कर्बुरमित्यनर्थांतरं, बकुशसंयमयोगाद्बकुशः, उपकरणशरीरभेदादयमपि
द्विविधः, तत्र वस्त्रपात्राद्युपकरणविभूषानुवर्तनशीलः प्रथमः, नखचरणकरमुखादिदेहावयवविभूषानुवर्ती
द्वितीयः. स चायं द्विविधोऽपि पंचधा, आभोगानाभोगसंवृत्तासंवृतयथासूक्ष्मभेदः, तत्राभोगः साधूना- ६
मकृत्यमेतत् शरीरोपकरणविभूषणमित्येवं ज्ञानं, तत्प्रधानो बकुश आभोगबकुशः, एवमन्येऽपि,
हाप्युक्तं—
आभोगे जाणंतो । करेइ दोसं अयाणमणभोगो ॥ मूलोत्तरेहिं संवुड । विवरीय असंवुडो
होइ ॥ १ ॥ अच्छिमुहमुज्जमाणो । होइ अहासुहुमउ तहा बकुसो ॥ अहवा जाणिज्जंतो । अ

संवुमो संवुमो इयरो ॥ २ ॥ इति. तृतीयः कुत्सितं शीलमस्येति कुशीलः, प्रतिषेवणाकषायभेदादयमपि द्वेधा, तत्र सेवना सम्यगाराधना, तत्प्रतिपक्षस्तु प्रतिषेवणा, तया कुशीलः प्रतिसेवनाकुशीलः. स पुनः पंचधा ज्ञानादिभेदात्, तत्र—इह णाणाइकुसीलो । उवजीवं होइ णाणपभिईउ ॥ अह सुहमो पुण तुस्सं । एस तवस्सित्ति संसारे ॥ १ ॥ कषायैः कुशीलः कषायकुशीलः, अयमपीत्थमेव पंचधैव, इह गाथा—नाणे दंसणलिंगे । जो जुंजइ कोहमाणमाईहिं ॥ सो णाणाइ कुसीलो । कसायउ होइ विन्नेउ ॥ १ ॥

चारित्तंमि कुसीलो । कसायउ जो पयबई सावं। मणसा कोहाइए । निसेवउ होइ अहासुहुमो ॥ २ ॥ अहवावि कसाएहिं । णाणाईणि उ विराहए जो उ ॥ सो नाणाइकुसीलो । नेउ वक्खाणभेएण ॥ ३ ॥ इति, चतुर्थ एव चतुर्थको भवति, निर्गतो ग्रंथान्मोहनीयकर्माख्यादिति निर्ग्रंथनामा, अयं च पंचधा, तत्रोपशांतमोहाद्धायाः क्षीणमोहछद्मस्थाद्धायाश्चांतर्मुहूर्तप्रमाणायाः प्रथमसमये वर्तमानः प्रथमसमयनिर्ग्रंथः, १, शेषेपु त्वप्रथमसमयनिर्ग्रंथः २. एवं निर्ग्रंथाद्धायाश्चरमसमये चरमसमयनिर्ग्रंथः ३. शेषेषु त्वित्वरः ४. सामान्येन तु यथासूक्ष्मः ५. इति पारिभाषिकीसं

ज्ञा. उक्तं चेह—

अंतमुहुत्तपमाणय—निग्गंथद्धाए पढमसमयम्मि ॥ पढमसमयनिग्गंथो । अन्नेसु अपढमसमउ
सो ॥१॥ एमेव तयद्धाए । चरमे समयंमि चरमसमउ सो ॥ सेसेसु पुण अचरमो । सामन्नेणं अहसु-
हुमोत्ति ॥२॥ सर्वेषामुत्तमः सर्वोत्तमः पंचमकः स्नान इव स्नानको घातिकर्ममलक्षालनात्,
अयमपि पंचधा, तत्राछवी घातिकर्मचतुष्टयक्षपणानंतरं तत्क्षपणाभावादिति प्रथमः १. अशबल ए-
कांतविशुद्धचरणोऽतिचारपंकाभावादिति द्वितीयः २, अकर्मांशो विगतघातिकर्मेति तृतीयः ३, संशु-
द्धज्ञानदर्शनधरः केवलज्ञानदर्शनधारीति चतुर्थः ४, अपरिश्रावी परिश्रवति आश्रवति कर्म बध्नाती
त्येवंशीलो न तथेति, अबंधको निरुद्धयोग इत्यर्थः, इति पंचमः स्नातकभेदः ५. अमीषां च श-
ब्दनयापेक्षया भेदः संभाव्यते, इह चोत्तरोत्तरेषां विशुद्धिमत्वादिदं क्रमः पुलाकादीनां, अमीषां
च वेदादि ३५ द्वारविचारः प्रज्ञप्तिपंचविंशतितमशतषष्ठोद्देशकादवसेय इति वृत्तार्थः ॥ ४७ ॥ अ-
थैते सर्वेऽपि संप्रति प्राप्यंते किंवा कतिचिदेवेत्याह—

॥ मूलम् ॥—निग्गंथसिणायाणं । पुलागसहियाण तिन्ह वुच्छेउ ॥ बकुसकुसीला दोणिवि ।

जा तिब्रं ताव होहेंति ॥ ५० ॥ व्याख्या—निर्ग्रंथस्नातकयोः पुलाकसहितयोस्त्रयाणां व्यवच्छेदो निर्वृतिर्जन्म प्रतीत्य तेषां तृतीयचतुर्थारकयोरेव भावात्. अथ निर्ग्रंथादिषु नामग्राहमभिहितेषु त्रयाणामिति गतार्थः, सत्यं, गतार्थानामपि दृश्यत एव लोके प्रयोगः तथा चाह जिनेंद्रबुद्धिः—यदि गतार्थानामप्रयोग एव स्यात्तदा पचति देवदत्त इत्यत्र पचतीत्येतत् तिङैवैकत्वस्याभिहितत्वाद्देवदत्त इति सुप एकवचनं न स्यादिति. बकुशकुशीलौ द्वावपीति प्राग्वत्, यावत्तीर्थं श्रीमहावीरस्य तावद्भविष्यति, तथा च व्यवहारभाष्यं—बहुसपडिसेवगा खलु इत्तिरिब्रेया य संजया दुन्नि जो तिब्रणुसज्जंतित्ति गाथार्थः ॥ ५० ॥ यतस्तौ यावत्तीर्थमनुषज्येते ततः किमित्याह—

॥ मूलम् ॥—ता तेसिं असढाणं । जहसत्ति जहागमं जयंताणं ॥ कालोचियजयणाए । बहुमाणो होइ कायव्वो ॥ ५१ ॥ व्याख्या—तत्तस्मात्तयोर्बकुशकुशीलयोरशठयोरमायाविनोर्यथाशक्ति यथाबलं यथागममागमानतिक्रमेण यतमानयोरुद्यतयोः, कथं? कालो दुःषमा तदुचितयतनया बहुतिशयेन मानः पूजा भवति कर्तव्य इति गाथार्थः ॥ ५१ ॥ अथ पूजामेव व्यनक्ति—

॥ मूलम् ॥—बहुमाणं वंदणयं । निवेयणा पालणा य जत्तेण ॥ उवगरणदाणमेवं । गुरुपू-

या होइ विन्नेया ॥५१॥ व्याख्या—बहुमानो मानसिकी प्रीतिः, वंदनं द्वादशावर्त्तं, निवेदना द्रव्यतो भावतश्च, तत्र द्रव्यतो धनधान्यादिसर्वस्वसमर्पणं, भावतः सर्वात्मना मन समर्पणं. पालना तदुपदेशाराधनं, चकारस्यावधारणार्थत्वात्, यत्नेनैव परमरहस्यमिदमित्यादरेणोपकरोति संयममनुतिष्ठतः साधोरुपकारं करोतीत्युपकरणं वस्त्रपात्रादि, तस्य दानं वितरणमेवेति समुच्चये, चकारोऽभ्युत्थानागच्छदभिगमनगच्छदनुव्रजनांजलिप्रग्रहादिबाह्यप्रतिपत्तिसूचकः, किं गुरुपूजा भवति विज्ञेयेति गाथार्थः ॥ ५२ ॥ अथ स्नातकाद्यपेक्षया हीनगुणानामन्येषां कथमिद्धं प्रतिपत्तिरित्याह—

॥ मूलम् ॥—पलए महागुणाणं । हवंति सेवारिहा लहुगुणावि ॥ अत्थमिए दिणनाहे । अहिलसइ जणो पईवंति ॥ ३५ ॥ व्याख्या—स्पष्टार्था, नवरं, प्रलयेऽभावे महागुणानां स्नातकादीनां लघवः शबलत्वकषायकलुषितत्वान्यां गुणाश्चारित्रगुणा येषां ते तथा, यतोऽस्तमिते दिननाथे सवितरि प्रदीपमप्यभिलषति जनः, तेनापि तमसि पदार्थावलोकनेन स्वार्थसिद्धेरिति ॥ ५३ ॥ यस्मादागमोऽप्येवमेव व्यवस्थितः तथाहि—

॥ मूलम् ॥—सम्मत्तनाणचरणाणु—पाइमाणाणुगं च जं तत्थ ॥ जिणपन्नत्तं भत्तीए । पूय-

ए तं तहाभावं ॥ ५४ ॥ व्याख्या—सम्यक्त्वं च ज्ञानं च चरणं च, तान्यनुपतत्यनुगच्छतीति, तथा आज्ञानुगं चाप्तोपदेशानुक्तमपि यत् किंचित्सम्यक्त्वाद्यनुपाति स्यादिति तस्य पृथगुपन्यासोऽयं, यत्र पुरुषे पश्येदिति शेषः, तं भावं पर्यायविशेषं गुणाभावेऽपि जिनप्रज्ञप्तमिति कृत्वा भक्त्या बहुमानतस्तथा सम्यक्त्वाद्युचितप्रतिपत्तिप्रकारेण पूजयेत् सत्कारयेदिति गाथार्थः ॥ ५४ ॥ इह च—

॥ मूलम् ॥—केसिं चिय आएसो । दंसणनाणेहिं वट्टए तित्थं ॥ वोछिन्नं च चरित्तं । वयमाणे होइ पछित्तं ॥ ५५ ॥ व्याख्या—केषांचित्प्रवचनैकदेशिनामादेशो मतं, किमित्याह—दर्शनज्ञानाभ्यां वर्तते प्रवहति तीर्थं चतुर्वर्णः संघः, चशब्दो हेतौ, यतो व्यवछिन्नं निवृत्तं चारित्रं, तथा चागमः—मूलगुणउत्तरगुणा । जम्हा न संति चरणसेढीउ ॥ तम्हा जिणेहिं दोन्निवि । पडिसिद्धा सव्वसाहूणं ॥ १ ॥ अग्गग्घाउ हणे मूलं मूलग्घाउ य अग्गयं ॥ इति, अस्य व्याख्या—

जह तालडुमस्स अग्गसूईए हयाए मूलो हउ चेव, मूलेवि हए अग्गसूई हया, एवं मूलोत्तरगुणेसुवि उवसंहारो, एवं च नहि कोइ सो संजउ जो मूलुत्तरगुणाणं अन्नयरं न पडिसेवइ, अन्नयरगुणपडिसेवणे य दुण्हवि मूलुत्तराण अभावो, दुण्हवि अभावे सामाइयसंजमस्स अभावो,

संजमस्स अभावे पंचएहवि नियंठाण अभावो, एवं च अचरित्तं तित्थं भवइत्ति सोपस्कारत्वादिति वदति ब्रुवाणे भवति आपद्यते प्रायश्चित्तमागमप्रतीतं, अन्यथा प्ररूपणेन श्रुतस्याशातनासंभवात्, यतोऽत्रैव वक्ष्यति सिद्धांतवचनं—' जो संजमए ' इत्यादि. किंच चारित्रनिषेधकैरपि तु प्रसन्नांतं तीर्थानुवृत्तिरिष्टैव, न च ज्ञानदर्शनचारित्रव्यतिरिक्तं तीर्थमस्तीति स्ववचनव्याघातः, तथा च श्रीभ-द्रबाहु:—दंसणनाणं चरित्तंमि निउत्तं जिणवरेहिं सव्वेहिं एएण होइ तित्थं, इति, तस्मात्तीर्थमि-च्छता चारित्रमप्यकामे नैष्टव्यं.

किंच यदि दर्शनज्ञानाभ्यामेव तीर्थं वर्तेत तदा श्रेणिकप्रभृतीनामपि श्रामण्यं प्रसज्येत, तेषा-मपि दर्शनज्ञानस्वभावात्, न च वाच्यं तेऽपि श्रमणा एव, श्रामण्यगुणयुक्तस्य नरकेष्वनुपपातात्, तेषां च नरकगमनप्रतिपादनात्. यदप्येकविंशतिवर्षसहस्राणि तीर्थानुवृत्तिरुच्यते तदपि नोपपद्येत, दर्शनज्ञानयोः षट्स्वपि समास्ववस्थितत्वात्, तयोरेव च मोक्षमार्गत्वे सर्वगतिभ्योऽपि मुक्तिगमन-प्रसंगाच्चेति स्थितं सांप्रतमपि चारित्रसहितं तीर्थमिति गाथार्थः ॥ ५५ ॥ पूर्वोक्तमेव भावयन्नाह—

॥ मूलम् ॥—जो भणइ नत्थि धम्मो । न य सामइयं न चेव य वयाइं ॥ सो समणसंघ-

ज्ञो । कायव्वो समणसंवेण ॥ ५६ ॥ व्याख्या—यो भणति नास्ति धर्मः क्षांत्यादिलक्षणः, न च सामायिकं रागद्वेषाभावरूपं, न चैव चेति समुच्चये, व्रतानि महाव्रतानि, स श्रमणसंघबाह्यः साधुसंघबहिस्ततः कर्तव्यः श्रमणसंघेन, द्वादशविधसंभोगेन परिहर्तव्यः, संभोगश्च यथा—उवहि १ सुय २ भत्तपाणे ३ । अंजलीपग्गहेइ य ४ ॥ दायणाय ५ निकाये य ६ । अब्भुठाणित्तिआवरे ७ ॥ १ ॥ किइकम्मस्सय करणे ८ । वेयावच्चकरणेणि य ९ ॥ समोसरणं १० सन्निसिज्जा य ११ । कहाए य पवंधणे १२ ॥ २ ॥ अस्य रूपकास्यार्थो निशीथपंचमोद्देशकभाष्यादवसेयः, नवरं दायणत्ति शिष्यगणार्पणं, निकायत्ति शय्योपध्यादिभिर्निमंत्रणं, यत्रानुयानादिषु बहवः साधवो मिलंति तत्समोसरणं, सन्निसिज्जायत्ति निषद्यागतस्य निषद्यागतेन सह श्रुतपरावर्तनं, कथाया वाग्जल्पादिरूपायाः प्रबंधनमिति गाथार्थः ॥ ५६ ॥ किमिति—

॥ मूलम् ॥—दुप्पसहंतं चरणं । जं भणियं भगवया ईहं खित्ते ॥ आणाजुत्ताणमिणं । न होइ अहुणत्तिया मोहो ॥ ५७ ॥ व्याख्या—दुःप्रसभो दुःप्रसभनामा आचार्योंते यस्य तत्तया, तद्गुणसंविज्ञानोऽयं बहुव्रीहिः, चरणं चारित्रं यद्यस्माद्भणितं भगवता श्रीमहावीरतीर्थकृता इहास्मिन्

भरतनाम्नि क्षेत्रे, यदवाचि—तित्थोच्छेयकाले । दुप्पसभो नाम अणगारो ॥ तंमि कालगए चरित्तं । तित्थं च वोच्छिज्जिहित्ति ॥ १ ॥ तस्मादपेगम्यमानत्वादाज्ञायुक्तानामप्यधुना दुःषमायां चरणं न भवतीत्येवंरूपा प्रतिपत्तिर्व्यामोहो मूढतेति गाथार्थः ॥ ५७ ॥ ननु तथाविधबुद्धिबलाद्यभावतः कथ मिदानीं चारित्रसंभव इत्याह—

॥ मूलम् ॥—कालोचियजयणाए । मच्छररहियाणउज्जमंताणं ॥ जणजत्तारहियाणं । होइ जइत्तं जइणसया ॥ ५८ ॥ व्याख्या—कालोचितयतनया प्राग्वन्मत्सररहितानामुपलक्षणत्वाद्राग-द्वेषवर्जितानामुद्यच्छतां प्रतिलेखनादिसामाचारीपु यतमानानां. जनयात्रारहितानां कृतप्रतिकृतिसुखदुः-खचिंतादिलोकव्यवहारमुक्तानां यतीनां यतित्वं चारित्रवत्त्वं भवति सदेति दुःषमांतं यावदंतररहित-मित्यर्थ इति गाथार्थः ॥ ५८ ॥ एतदेव समर्थयति—

॥ मूलम् ॥—न विणा तित्थं नियं—ठेहिं नातित्था य नियंठया ॥ छकायसंजमो जाव । ता-व अणुसंजणा दुण्हं ॥ ५९ ॥ व्याख्या—न विना निर्ग्रंथैश्चारित्रिभिस्तीर्थं, न चातीर्था निर्ग्रंथाः, तीर्थं विना तेऽपि न भवंतीत्यर्थः, अनयोरन्योन्याविनाभावित्वमितिहृदयं. इह च पुलाकबकुशप्रति-

षेवणाकुशीलानामेवायं नियमः. तथाच प्रज्ञप्तिः—पुलाएणं भंते किं तित्थे हुज्जा अतित्थे हुज्जा? गोयमा! तित्थे होज्जा नो अतित्थे होज्जा, एवं बउसे पडिसेवणाकुसीलेवि. कसायकुसीले पुच्छा, गोयमा! तित्थे वा होज्जा अतित्थे वा होज्जा, जइ अतित्थे हुज्जा तित्थयरे हुज्जा पत्तेयबुद्धे होज्जा? गोयमा! तित्थयरे वा होज्जा पत्तेयबुद्धे वा होज्जा, एवं नियंठेवि, एवं सिणायेवि. तस्मात् षट्कायसंयमो यावत्तावदनुषंजना अनुवृत्तिर्द्वयोरिति गाथार्थः ॥ ५९ ॥ उत्तरार्धमेव विवृणोति—

॥ मूलम् ॥—जा संजमया जीवेसु । ताव मूला य उत्तरगुणा य ॥ इत्तरिय छेय संजम । नियंठ बउसाय पडिसेवी ॥ ६० ॥ व्याख्या—यावत् स्वार्थिकतत्प्रत्ययांतत्वात् संयमता रक्षणं, केषु विषये? जीवेषु पृथिव्यादिषु, शेषगुणासंभवेऽपि यावत् षड्जीवरक्षामात्रमपि लभ्यत इत्यर्थः. तावदुत्तरपदस्थगुणशब्दस्येहापि संबंधान्मूलगुणा उत्तरगुणाश्च, इत्वरं च सामायिकं सामायिकसंयमः, भीमादिन्यायेन छेदोपस्थापनीयसंयमश्च तौ, विभक्तिलोपश्चेह, यावच्चैतत्संयमद्वयं तावन्निर्ग्रंथौ, चकारस्य छंदोभंगभयान्मध्यपाताद्दीर्घत्वस्य च प्राकृतत्वात्, बकुशप्रतिषेविणौ च बकुशप्रतिषेवणाकुशीलावित्यर्थः, अनुषज्ज्योते इति सर्वत्र योग इति गाथार्थः ॥ ६० ॥ एतदेव समस्ततीर्थकृ

तीर्थव्यवस्थितत्वेन समर्थयन्नाह—

॥ मूलम् ॥—सव्वजिणाणं निच्चं । बकुसकुसीलेहिं वट्टए तित्थं ॥ नवरकसायकुसीला । अ-
पमत्तजईवि सत्तेण ॥ ६१ ॥ व्याख्या—सर्वजिनानां पुरिमांतिममध्यमविदेहजतीर्थकृतां बकुशकुशी-
लाभ्यां वर्तते तीर्थं प्रवचनं नित्यमिति सततं, पुलाकादीनामल्पत्वात् कादाचित्कत्वात् सतामपि च
तीर्थप्रवृत्तिं प्रत्यनंगत्वात्, नवरं केवलमयं विशेषः—कषायकुशीला अप्रमत्तयतयोऽपि सप्तमगुणस्था-
नवर्तिनोऽपि भण्यंत इति विशेषः. कथं? सत्वेन कषायसत्तयेति गाथार्थः ॥ ६१ ॥ अथ सिंहाव-
लोकनन्यायेन यदुक्तं प्राग् यस्तं स्थापयत्यपात्रे स महापाप इति तद्विशिनष्टि, यद्वा यत एव ब-
कुशकुशीलाभ्यां तीर्थप्रवृत्तिरत एव—

॥ मूलम् ॥—गुरुगुणरहिओ य इहं । दट्ठव्वो मूलगुणविउत्तो जो ॥ न उ गुणमित्तविहीणु
—त्ति चंडरुद्दो उदाहरणं ॥ ६२ ॥ व्याख्या—चशब्दोऽत्र पुनःशब्दार्थः, ततो गुरुगुणरहितः पु-
नरिह गुरुविचारे स एव द्रष्टव्यो ज्ञातव्यः, यः किं? यो मूलगुणवियुक्तो महाव्रतादिविरहितः स
म्यग्ज्ञानक्रियारहितो वा, उपलक्षणत्वादभीक्ष्णमुत्तरगुणविराधकश्च ' जो चयइ उत्तरगुणे । मूल-

गुणेवि अचिरेण सो चयइ ॥ ' इति वचनात्, न तु पुनर्गुणमात्रविहीनो मधुरभाषणविशिष्टोप शमादिगुणविकल इत्यस्मिन्नर्थे चंडरुद्रश्चंडरुद्राचार्य उदाहरणं दृष्टांतः. इह च प्रयोग —गुणमात्रहीनोऽपि गुरुरेव मूलगुणयुक्तत्वात् चंडरुद्राचार्यवत्. तथा ह्यसौ प्रकृतिरोषणोऽपि बहूनां संविग्नगीतार्थशिष्याणाममोचनीयो विशिष्टबहुमानविषयश्चाभूत्, तत्कथानकं चैवं—आसीदामुक्तमुत्यक्त— ज्ञानादिगुणभूषणः ॥ चंडरुद्र इति श्रीमान् । सूरिः प्रकृतिरोषणः ॥ १ ॥ अनाभोगादपि कृते । क्रियालोपे लघुन्यपि ॥ आचुक्रोशाकृशक्रोधा—वेशवश्यो मुनीनसौ ॥ २ ॥ मनागपि मुनीनां स । स्खलितं क्षंतुमक्षमः ॥ संक्लेशभीरुर्गच्छस्या—दूरदेशे स्थितिं व्यधात् ॥ ३ ॥ स तथा विहरन् ग्रामा—नुग्रामं नैष्ठिकाग्रिमः ॥ उज्जयिन्यामथान्येद्यु—रुद्याने समवासरत् ॥ ४ ॥ कश्चिदाकारमाधुर्य—निर्जितामरदारकः ॥ इभ्यसूनुस्तदावंती—नगर्यां पर्यणीयत ॥ ५ ॥ मुनिव्रातपदांभोज— रजःपातपवित्रितं ॥ तदुद्यानं समं मित्रैः । क्रीडितुं स युवा ययौ ॥ ६ ॥ तत्रेभ्यसूनोः सुहृदः । क्रीडंतो ददृशुर्मुनीन् ॥ ववंदिरे च ते सर्वे । श्रेष्ठिसुतसमन्विताः ॥ ॥ ७ ॥ ऊचुश्च पूज्या. प्रव्रज्यां । दत्त नः सुहृदे स्यात् ॥ अयं हि बाल्यात् संविग्नो । गृहवासपराङ्मुखः ॥ ८ ॥ विधाय विषयानेष ।

विभवं लोष्टराशये ॥ तृणाय स्त्रैणमाबाल्या—न्मेने मुनिरिवानिशं ॥ ९ ॥
शठांस्तानिंगितैर्ज्ञात्वा । साधवः सुधियोऽप्यधुः ॥ अधिकारी गुरुर्दीक्षा—दानादौ न पुनर्वयं
॥ १० ॥ गुरुः क्वेति तदापृष्टे—स्थ सूरिरदर्श्यत ॥ अमीषामौषधमसा—वेवेत्यालोच्य साधुभिः
॥ ११ ॥ सुधर्पणोऽयमेकाकी । वर्षीयानिति दारकैः ॥ सांतर्हासैर्गुरुर्गत्वा । नत्वा च प्राग्वदोच्यत
॥ १२ ॥ अहो मया सदामीषां । मूर्खाणामेष विप्लवः ॥ ध्यात्वेत्यमर्षण. सूरि—स्तैर्भस्मानाययद्
द्रुतं ॥ १३ ॥ पश्याम. किं करोत्येष । इति बुध्या दुराशया. ॥ सहासा. सहसा केचि—त्तस्मै त्र-
स्मोपनिन्यिरे ॥ १४ ॥ अथ यून. शिरः सूरि—रुत्युग्मांतरस्थितं ॥ क्षणाल्लुलुंच मित्रेषु । मुंच-
मुंचेति वादिषु ॥ १५ ॥ नवोढश्चिंतयामास । लुंचितोऽस्मि यथातथा ॥ ममेदृशस्य त्वे तर्हि । गार्हि-
ता गृहमेधिता ॥१६॥ गृहीतं विप्लवेनापि । भावतो भवतु व्रतं ॥ इत्यदित्यादतोऽप्यर्चा । ज्ञात. स-
न्मणिरर्हति ॥ १७ ॥ अथ साश्रूणि मित्राणि । बभाणाभिनवो मुनि. ॥ भद्राः प्रमोदावसरे । वि-
पाद. क्रियते किमु ॥ १८ ॥ अकामस्यापि मे दीक्षा । जज्ञे पुण्योदयादियं ॥ अगादलसमध्येन ।
तदसौ जाह्नवी स्वयं ॥ १९ ॥ न विप्लवममुं यूयं । सौम्याश्चेदकरिष्यथ ॥ कथं दीक्षा ममेदृक्षा—

भविष्यद् दुर्मतेस्तदा ॥ २० ॥ प्राणिनां स्याडुपाध्यायः । को वा नाधर्मकर्मणि ॥ निवर्नयति पापा-
द्य—स्तद्धि मित्रं प्रवक्ष्यते ॥ २१ ॥ दीक्षा यथातथावापि । गृहीता मुच्यते कथं ॥ अथ मुच्येत वा-
च्यत्वं । मज्जनं च भवार्णवे ॥ २२ ॥

तद्यात यूयं मा चैतत् । कमपि ज्ञापयिष्यथ ॥ नो चेन्मम करिष्यंति । ज्ञातयो व्रतखंडनं ॥
॥ २३ ॥ उक्त्वेति दत्वालंकारान् । विसृष्टाः सुहृदोऽमुना ॥ अगमन् केचन क्वापि । बाष्पपूरप्लुतेक्ष-
णा ॥ २४ ॥ अथ शैक्षोऽभ्यधाद्गीति—रत्र मे स्वजनात्प्रभो ॥ प्रसद्य सद्यो गमन—मन्यत्र क्रि-
यतां ततः ॥ २५ ॥ सूरिरूचे दिवा तर्हि । वर्त्मनः प्रत्युपेक्षणां ॥ गत्वा त्वं कुरु येन स्या—द्विहा
रो निशि नौ सुखं ॥ २६ ॥ शैक्षकेण तथा कृत्वा । विज्ञप्तो रजनीमुखे ॥ विहितावश्यकश्चंड—रु-
द्रस्तेन सहाचलात् ॥ २७ ॥ व्यक्तमग्रस्थिते मार्ग—मेकाग्रे कथयत्यपि ॥ तस्मिन् गुरुर्जराक्लिष्टः ।
स्खलतिस्म पदे पदे ॥ २८ ॥

पंथानं प्रत्युपेक्षिष्टः । कीदृशं त्वं दुराशय ॥ इति तीक्ष्णाक्षरैः क्रौर—रिवात्तीक्ष्णं वपुर्दहन् ॥
॥ २९ ॥ दंडेन गुरुराजघ्ने । शिष्यशीर्षं मुहुर्मुहुः ॥ नश्यद्गुणाक्रंदरवा—कारठात्कारदारुणं ॥३०॥

युग्मं ॥ क्षमिणामग्रणी शैक्षः । स दध्यौ शुद्धधीस्त्विदं ॥ धिगहं गुरुसंताप—भागभागभवं कथं
॥ ३१ ॥ विनीतस्येंगितज्ञस्य । विदुष. कृतकर्मणः ॥ गुरुः स्वपरिवारस्य । तस्यांतः सन् समाधिना
॥ ३२ ॥ दुरात्मना मया प्रापि । पश्य क्लेशमयीं दशां ॥ उपप्लवाय तिग्मांशो—र्भवेडाहोर्हि संग-
मः ॥ ३३ ॥ युग्मं ॥ गुरुणा विकटादस्मा—दाकृष्टोऽस्मि भवावटात् ॥ दुर्गमार्गांबुधावस्मिन् । मया
तु निहितो गुरुः ॥ ३४ ॥ आक्रोशतो घ्नतो वात्र । दोषः कोऽप्यस्ति नो गुरोः ॥ अपराधो ममैवा-
य—मुपतापयतो गुरुं ॥ ३५ ॥ इति भावयतस्तस्य । क्षमोपचितचेतस ॥ घातिकर्मक्षयाद्दिव्यं ।
केवलज्योतिरुद्ययौ ॥ ३६ ॥ करामलकवल्लोकं । तेनाकलयतोऽखिलं ॥ सुखं च नयतः सूरिं ।
विभातास्य विभावरी ॥ ३७ ॥

ततो नवोदितादित्य—किरणालिमिवारुणां ॥ गुरु क्षरंतीमैक्षिष्ट । शैक्षे रुधिरधोरणिं ॥ ३८ ॥ गु
रूचे चेद्दृढाचरित—श्चिरप्रव्रजितोऽप्यहं ॥ त्वमद्यदीक्षितोऽपीह—गहो नौ महदंतरं ॥ ३९ ॥
रौ मय्यसती क्षांति—स्त्वयि शिष्ये कथं गता ॥ अविद्यमानं कूपेंबु । प्रणाल्यां कथमागतं ॥ ४० ॥
धिगधन्यं गुणैः शून्यं । न्यूनं चारित्रपर्यवैः ॥ मामाचार्यब्रुवं कोटि—मारूढं क्रोधपाप्मनः ॥ ४१ ॥

अस्य मे सुकुले जन्म । प्रव्रज्या दीर्घकालिकी ॥ चिराद्गुरुपदोपास्तिः । सूत्रार्थावगमो मनाक् ॥ ॥ ४२ ॥ आचार्यत्वं परिवार—स्तत्किं यन्न क्रमोचितं ॥ तथापि दुर्जयं स्त्रीव । न क्षमा मां स्पृशत्यपि ॥ ४३ ॥ युग्मं ॥ इति स्वं तीव्रसंवेग—योगान्निंदन्नवाप सः ॥ आचार्यश्चंडरुद्रोऽपि । शुक्लात्मा केवलश्रियं ॥ ४४ ॥ भूयः सूरिस्तयाह्लाय । स्वपरीवारसंपदा ॥ दर्शात इव शीतांशु—ज्योत्स्नया समयुज्यत ॥ ४५ ॥ विहृत्य सुचिरं धात्र्या—मुध्धृत्य सुबहुं जनं ॥ भवांधकूपादाप श्री—चंडरुद्रः शिवास्पदं ॥ ४६ ॥ इथ्थं क्षांतिगुणेन किंचिदमुनैवैकेन शून्योऽपि सन् । पूर्णो मूलगुणैस्तथोत्तरगुणैः श्रीचंमरुद्रः परै. ॥ रेखामेप युगप्रधानगणभृत्पंक्तौ परां प्रासवां—स्तत्केनापि गुणेन कश्चन गुरुर्न्यूनोऽपि पूज्यः सतां ॥ ४७ ॥ इति गाथार्थः ॥ ६२ ॥ संप्रति दुःषमाद्यनुभावमाश्रित्योपदेशमाह—

॥ मूलम् ॥—कालाइदोसज जइवि । कहवि दीसंति तारिसा न जइ ॥ सवह तहवि नहित्ति । नेव कुज्जा अणासासं ॥ ६३ ॥ व्याख्या—कालो दुःषमा आदिर्येषां चारित्रप्रतिकूलद्रव्यक्षेत्रभावानां ते तथा, तेषां दोषतो यद्यपि तादृशाः समस्तसाधुगुणकलिता यतयो न दृश्यंते, तथापि

सर्वत्र न संतीत्येवंरूपमनाश्वासमनास्थां न कुर्यादिति गाथार्थः ॥ ६३ ॥ यतः—

॥ मूलम् ॥—कुग्गहकलंकरहिया । जहसत्ति जहागमं च जयमाणा ॥ जेण विसुद्धचरित्ता । कहिया अरिहंतसमयंमि ॥ ६४ ॥ व्याख्या—कुग्रहोऽसदभिनिवेशः, स एव कलंको दोषस्तेन रहिता यथाशक्ति यथागमं च यतमानाः, येन कारणेन विशुद्धचारित्रिण इति विशेषणयुक्ताः कथिता अर्हत्समये जिनमत इति गाथार्थः ॥ ६४ तादृशश्च दृश्यंत एव, तथाहि—

॥ मूलम् ॥—अज्जवि तिन्नपइन्ना । गरुयभरुव्वहणपच्चला लोए ॥ दीसंति महापुरिसा । अखंभियसीलपब्भारा ॥ ६५ ॥ व्याख्या—अद्यापि संप्रत्यपि तीर्णेव तीर्णा पर्यंतगमनान्महानदीव प्रतिज्ञा 'करेमि भंते सामाइयं' इत्याद्यभ्युपगमो यैस्ते तथा, गुरुश्चासौ भर इव भरश्च दुर्वहत्वसाधर्म्यात्संयमस्तस्योद्वहनं निर्वहणं, तत्र प्रत्यलाः समर्थाः, क्वचिद् द्रव्याद्यापद्यप्यनासेवितापवादा इति तत्वं, अखंभितशीलप्राग्भारा बलात्कारामंत्रणोपनिपातेष्वप्यक्षुभितचेतसः, अत एव महापुरुषा लोके दृश्यंत इति गाथार्थः ॥ ६५ ॥ तथा—

॥ मूलम् ॥—अज्जवि तवसुसियंगा । तणुयकसाया जिइंदिया धीरा ॥ दीसंति जए जइणो

। मम्महहिययं वियारंता ॥ ६६ ॥ व्याख्या—स्पष्टा, नवरं धीराः क्षुदादिपरीषहसहिष्णवः, तथा मन्मथस्य वेदोदयस्य हृदयं लक्षणया रहस्यं विदारयंत इति. ॥ ६६ ॥ तथा—

॥ मूलम् ॥—अज्जवि दयसंपन्ना । छज्जीवनिकायरक्खणुज्जुत्ता ॥ दीसंति तवस्सिगणा । विगहविरत्ता सुईजुत्ता ॥ ६७ ॥ व्याख्या—अद्यापि दयासंपन्ना अत एव षड्जीवनिकायरक्षणोद्युक्ता दृश्यंते तपस्विगणा विकथाविरक्ताः, श्रुतिः स्वाध्यायस्तेन युक्ता इति गाथार्थः ॥ ६७ ॥ पूर्वोक्तमेव संगृह्णन् किंचिद्विशेषमाह—

॥ मूलम् ॥—अज्जवि खंतिपइठि—याइं तवनियमसीलकलियाइं ॥ विरलाइं दूसमाए । दीसंति सुसाहुरयणाइं ॥ ६८ ॥ व्याख्या—भावितार्थेयं, नवरं नियमा द्रव्याद्यभिग्रहा इति ॥ ॥ ६८ ॥ ततश्च—

॥ मूलम् ॥—इइ जाणिऊण एयं । मा दोसं दूसमाए दाऊण ॥ धम्मुज्जमं पमुंचह । अज्जवि धम्मो जए जयइ ॥ ६९ ॥ व्याख्या—इति दर्शितप्रकारेण ज्ञात्वा एतद् दुष्षमायामपि चारित्रास्तित्वं मा धर्मोद्यमं प्रमुंचतेति योगः, किं कृत्वा? दत्वा दोषं चारित्रप्रतिकूलतालक्षणं दुःषमा-

या अवसर्पिणीपंचमारकस्य, यतोऽद्यापि धर्मश्चारित्रलक्षणो जगति जयत्यतिशायितया वर्त्तत इति गाथार्थ. ॥ ६९ ॥ एवमनेकधा दुःषमायां चारित्रास्तित्वं प्रतिष्ठाप्य निगमनमाह—

॥ मूलम् ॥—ता तुलिय नियबलाणं । सत्तीए जहागमं जयंताणं ॥ संपुन्नाच्चियकिरिया ॥ दुप्पसहंताण साहूणं ॥ ७० ॥ व्याख्या—तत्तस्मात्तुलितनिजबलानां सर्वात्मना व्यापारितस्वसामर्थ्यानां, संयमयोगेष्विति शेषः, तथा शक्त्या यथागमं यतमानानां यतनावतां क्वचिदशिवादिकारणेष्वकल्पप्रतिषेवायां प्राप्तायामिति गम्यं, संपूर्णैव न पुनः प्राक्तनयतिभ्यो न्यूना क्रिया संयमानुष्ठानं, स्वसामर्थ्यतुलनां प्रत्युभयेषामपि समानत्वात्, दुःप्रसभांतानां साधूनामिति. ततश्च सांप्रतं यतयोऽपि कतिचित्संपूर्णचारित्रवंत एव, संयमयोगेषु तुलितनिजबलत्वात्प्राक्तनयतिवदिति गाथार्थ ॥ ॥ ७० ॥ एवं चारित्रिणं व्यवस्थाप्य सामायिकोत्कर्षमाविर्भावयंस्तस्यैव चित्तं नमस्कुरुते—

॥ मूलम् ॥—लाहालाहसुहेसु । जीवियमरणठिईपयाणेसु ॥ हरिसविसायविमुक्कं । नमामि चित्तं चरित्तीणं ॥ ७१ ॥ व्याख्या—उत्तानार्था, नवरं हर्षः प्रमोदः, स च लाभादिषु. विषादो दैन्यं, स चालाभादिषु, ताभ्यां विमुक्तं, तथा नमहेति विवक्षिते कवेरुक्तगुणगुरोर्भक्तिपारवश्यात् न-

मामीत्यायातमिति ॥ ७१ ॥ हर्षविषादविमुक्ततामेवोपदेशद्वारेण द्रढयन्नाह—

॥ मूलम् ॥—वंदिज्जंतो हरिसं । निंदिज्जंतो करेज्ज न विसायं ॥ न हु नमिय निंदीयाणं । सुगई कुगईव बेंति जिणा ॥ ७२ ॥ व्याख्या—वंद्यमानो नमस्यमानो जनैरिति शेषः, हर्षं न कुर्यादितीहापि योगः. निंद्यमानो हील्यमानः कुर्यान्न विषादं, यदाह—वंदिज्जमाणा न समुक्कसंति । हीलिज्जमाणा न समुज्जलंति ॥ दंतेण चित्तेण चरंति लोए । मुणी समुग्घाइयरागदोसा ॥१॥ किमिति? यतो हुरेवकारार्थः. नैव नतानिंदितानां यथासंख्यं सुगतिं मोक्षादिकां, कुगतिं वा नरकादिकां ब्रुवते जिनास्तीर्थकृतः, तयोः स्वकृतसदसदनुष्टानमूलत्वादिति गाथार्थः ॥ ७२ ॥ सर्वजनवंद्यमानस्य गुरोर्हर्षो माभूदिति तर्जयन्निव भूयोऽप्याह—

॥ मूलम् ॥—वंदामि तवं तह । संजमं च खंतीं च बंभं च ॥ जीवाणं च अहिंसा । जं च नियत्ता घरावासा ॥ ७३ ॥ व्याख्या—वंदे तपस्तथा संयमं चेंद्रियमनोनिग्रहं क्षांतिं च ब्रह्मचर्यं च जीवानां चाहिंसां यच्च निवृत्ता विरता गृहावासात्तच्च विरतत्वं वंदे इत्यर्थः. समदेहादित्वेन वंद्यत्वे विशेषाभावाद्गुरुगता ज्ञानदर्शनचारित्रपर्याया एव वंदनीया इत्यर्थः. चकाराः स्वगतानेकभेदसू-

चकाः. इति गाथार्थः ॥ ७२ ॥ अथ धर्मस्य दया मूलं, न चाक्षमावान् दयां समाधत्ते, तस्माद्यः क्षांतिपरः स साधयत्युत्तमं धर्ममिति वाचकवचनमाश्रित्य त्वया क्षमैवावलंबनीयेत्युपदिशन्नाह—

॥ मूलम् ॥—जइ खमसि तो नमिज्जसि । छज्जइ नामंपि तुह खमासमणो ॥ अह न खमसि नमिज्जसि । नामंपि निरत्थयं वहसि ॥ ७४ ॥ व्याख्या—यदि क्षमसेऽनिमित्तं निंद्यमानोऽपि क्रोधं न करिष्यसि, ततो नम्यसे इह लोकेऽपि जनवंदनीयस्तदा भविष्यसीत्यर्थः. छज्जइत्ति शोभते नामापि तव तत इतीहापि योगः, किं तन्नाम? क्षमाश्रमण इति, क्षमाप्रधानः श्रमणः क्षमाश्रमण इत्यन्वयघटनात्, व्यतिरेकमाह—अथ न क्षमसे तदा न नम्यसे, नामापि क्षमाश्रमण इति निरर्थकं वहसि, अन्वयाघटनाद् वृद्धपुरुपेऽजरामरादिव्यपदेशवदिति गाथार्थः ॥ ७४ ॥ अथ निरर्थकनामवाहिन एव भेदेनाख्याय तेषु कृत्यमाह—

॥ मूलम् ॥—पासत्थसन्नकुसीलरूवा । संसत्तहाछंदसरूवधारी ॥ आलावमाईहि विवज्जणिज्जा । अवंदणिज्जा य जिणागमंमि ॥ ७५ ॥ व्याख्या—पार्श्वे ज्ञानादीनां तिष्ठतीति पार्श्वस्थः, अथवा मिथ्यात्वादयो बंधहेतवः पाशास्तेषु तिष्ठतीति पाशस्थः, अवसन्न इवावसन्नः सामाचार्याः सेव

ने शिथिलीभूतः पराक्रम इत्यर्थः, कुत्सितं शीलमस्येति कुशीलस्तत एतेषां स्वरूपं स्वभावो येषां ते तथा, संसक्तः सदसदाचारयोः संपृक्तः, यथाछंदः स्वरुचिप्रधान उत्सूत्रप्ररूपक इत्यर्थः, तयोः स्वरूपं धारयंति ये ते तथा, वचनव्यत्ययः प्राकृतत्वात्, आलापादिभिरादिशब्दात्संवासादिभिर्विवर्जनीयाः, तथा च—आलावो संवासो । विस्संभो संथवो पसंगो य ॥ हीणायारेहिं समं । सव्वजिणिंदेहिं पडिकुठो ॥ १ ॥ अवंदनीयाश्च जिनागमेऽर्हत्प्रवचन इति. पार्श्वस्थादिस्वरूपं च सूत्रगाथाभिरुच्यते—सो पासत्थो दुविहो । सव्वे देसे य होइ नायव्वो ॥ सव्वंमि नाणदंसण—चरणाणं जो उ पासंमि ॥ १ ॥ देसंमि उ पासत्थो । सेज्जायरभिहडनीयपिंडं च ॥ नीयं च अग्गपिंडं । भुंजइ निक्कारणे चेव ॥ २ ॥ पिंडशब्दो नित्यशब्दश्च सर्वपदेषु संबध्यत इति. तथा—

कुलनिस्साए विहरइ । ठवणाकुलाणि य अकारणे विसइ ॥ संखडिपलोयणाए । ( विवाहाद्यवलोकनाय ) गच्छइ कुणइ संथवं कुणइ ॥ १ ॥ मातादिसंबंधघटनसंबंधप्रकटणं. उसन्नोवि य दुविहो । सव्वे देसे य तह सव्वंमि ॥ उउबद्धपीढफलगो । ठवियगभोइ य नायव्वो ॥ २ ॥ ऋतुबद्धे पीठफलकासेवक एकांतेनास्तीर्णसंस्तारक एव वा, शेषं सुगमं. देशावसन्नस्तु—आवस्सगस-

ज्झाए । पडिलेहणझाणाणिकं भत्तठे ॥ अइगमणे निग्गमणे । ठाणे य निसीयणतुयट्टे ॥ १ ॥ ए-
तेषु विषये देशावसन्नो भवतीत्यर्थः. कदा इत्याह— ( यदेतानि सर्वथा न करोतीत्यर्थः )
आवस्सगाइयाइं । न करे अहवा वीहीणमहीयाइं ॥
अन्यथा—गुरुवयणबला य तहा । ( क्वचिद्वितथाचरणे गुरुणा प्रेरितः सन् संमुखीभूयालजाला-
नि वक्ति, न पुनः सम्यक् प्रतिपद्यते ) भणिओ एसो उ ओसन्नो ॥ १ ॥ तिविहो होइ कुसीलो
। णाणे तहा दंसणे चरित्ते य ॥ तत्थ य णाणकुसीलो । अकालसज्झायमाईहिं ॥ २ ॥ सम्मत्त-
कुसीलो पुण । संकाइसेवगो मुणेयव्वो ॥ कोउगभूईकम्माइ । सेवगो होइ चरणंमि ॥ ३ ॥ सो-
भाग्यादिकृते योषिदादीनां त्रिकचतुष्कादिषु स्नानादिकरणं कौतुकं, ज्वराद्यपगमार्थमभिमंत्रितभस्म-
नो दानं भूतिकर्म, आदिशब्दान्निमित्तादिकमवसेयमिति. संक्लिष्टाक्लिष्टभेदात् संसक्तोऽपि द्वेधा, त-
त्र—पंचासवप्पवत्तो । जो खलु तीहिं गारवेहिं पडिबद्धो ॥ इत्थीगिहिसंकिलिट्ठो । संसत्तो संकि-
लिट्ठो उ ॥ १ ॥
स्त्रीसंक्लिष्टः स्त्रीप्रतिषेवी, गृहिसंक्लिष्टस्तद्धान्यादितप्तिकारी. असंक्लिष्टस्तु—पासत्थाइएसु । सं-

विग्गेसु च जह संमिलइ ॥ तह तारिसउ होइ । पियधम्मो अहव इयरो उ ॥ १ ॥ धार्मिकमध्ये धार्मिकमिवात्मानं दर्शयति, इतरेषु त्वितरमिति. उस्सुत्तमायरंतो । उस्सुत्तं चेव पन्नवेमाणो ॥ एसो उ अहाछंदो । इछाछंदोत्ति एगठ ॥ १ ॥ इह चोपलक्षणमिदं, अन्येऽपि नित्यवासिकथिकप्राश्निकमामकसंप्रसारिणः सूत्रेऽवंद्यत्वेनाभिहिताः, तल्लक्षणमिदं—एगखेत्तंमि सया । तहाविहालंवणं विणा जे उ ॥ विहरइ सायागरुउ । नियावासंतिगं बेंति ॥ १ ॥ आहाराईणठा । जसहेउं अहव पूयणनिमित्तं ॥ तक्कामो जो धम्मं । कहेइ सो काहिउ होइ ॥ २ ॥ लोइयववहारेसु । लोइयसहाइएसु कज्जेसु ॥ पासणियत्तं ( विचारणं ) कुणइ । पासणिउ सो उ नायव्वो ॥ ३ ॥ खेत्ताइसु ममत्तं । कुणमाणो मामगो मुणेयव्वो ॥ कयविक्कयाय गिहिणा—मंतंतो संपसारीउ ॥ ॥ ४ ॥ इति गाथार्थः ॥ ७५ ॥ अथैतद्वंदने को दोष इत्याह—

॥ मूलम् ॥—वंदंतस्स उ पासह—माईणो नेय निज्जर न कित्ती ॥ जायइ कायकिलेसो । बंधो कम्मस्स आणाई ॥ ७६ ॥ व्याख्या—वंदमानस्य पार्श्वस्थादीन्नैव निर्जरा कर्मक्षयलक्षणा, तीर्थकराज्ञाविराधनद्वारेण निर्गुणत्वान्न कीर्तिरहो पुण्यभागयमित्येवंलक्षणा, अपित्वकीर्तिरेव, यद-

यमेवंस्वरूपोऽप्येतान् वंदत इति. तथा जायते कायक्लेशोऽवनामादिलक्षणः शरीरखेदः, तथा बंधो विशिष्टरचनया आत्मनि स्थापनं, क्रियत इति कर्म ज्ञानावरणीयादि तस्य, तदा चानुमोदनात्, तथा चाभिहितं—किइकम्मं च पसंसा । सुहसीलजणम्मि कम्मबंधा य ॥ जे जे पमायठाणा । ते ते उववूहिया हुंति ॥ १ ॥ पदैकदेशेऽपि पदावगमादाज्ञाभंगादयश्च जायंत इतीहापि योगः, तत्र भगवत्प्रतिकुष्टवंदनेनाज्ञाभंगः, तं दृष्ट्वान्येऽपि वंदंत इत्यनवस्था, तान् वंदमानान् दृष्ट्वान्येषां मिथ्यात्वं, कायक्लेशतो देवताभ्यो वात्मविराधना, तद्वंदनेन तत्कृतासंयमानुमोदनात्संयमविराधनेति गाथार्थः ॥ १६ ॥ एवं तावत्पार्श्वस्थादीन् वंदमानस्य दोषा उक्ताः, सांप्रतं तेषामेव गुणाधिकवंदन प्रतिषेधमकुर्वतामपायान् दर्शयति—

॥ मूलम् ॥—जे बंभचेररस्स वयस्स भट्टा । उद्धुंति पाए गुणसुट्ठियाणं ॥ जम्मंतरे उल्लहवोहिया ते । लाहेवि कुंटत्तणयं लहंति ॥ १७ ॥ व्याख्या—षष्ठ्याः पंचम्यर्थत्वात् ये ब्रह्मचर्याद्व्रताद्भ्रष्टाः, शेषव्रतोपलक्षणमिदं, अस्यैव च भणनमेतद्भंशस्यातिदौष्ट्यख्यापनार्थं, अत एवात्रापवादोऽपि नास्ति, तथा चात्र कल्पभाष्यं—कामं सव्वपएसुवि । उस्सग्गववायधम्मया जुत्ता ॥ मुत्तुं मेहुण-

न्नावं । न विणा तं रागदोसेण ॥ १ ॥ उड्डंतित्ति उपनयंति पादौ चरणौ गुणसुस्थितानां मूलोत्तरगुणधारिणां, वंदनमानानामिति शेषः, त एवमुपचितपापन्नरा जन्मांतरे दुर्लन्नबोधिका नरकतिर्यक्षु भूयोन्नूयः परिभ्रम्य कदाचित्पुनरनंतकालात्तदवाप्तेः.

किंच लब्धायमपि बोधौ कुंटत्वमंटत्वमुपलक्षणत्वादांध्यबाधिर्यमौक्यरोगित्वादि च लन्नंते, यथा न शक्नुवंति धर्ममनुष्ठातुं, कुंटः पाणिवैकल्यमंटस्तु विसंस्थुलोरुजंघ इति. तस्मादवंदनीया एते पार्श्वस्थादय इति स्थितमिति गाथार्थः ॥ ७७ ॥ अत एव च—

॥ मूलम् ॥—पासत्थो उसन्नो । कुसीलसंसत्तनीय अहछंदो ॥ एएहिं आयरियं । न आयरिज्ज न यासंसे ॥ ७८ ॥ व्याख्या—पार्श्वस्थादयो वर्णितस्वरूपास्तत एतैराचीर्णमाचरितं नाचरेन्नाशंसेच्चेति गाथार्थः ॥ ७८ ॥ यतः—

॥ मूलम् ॥—जं जीयमसोहिकरं । पासत्थपमत्तसंजयाईहिं ॥ बहुएहिंवि आइन्नं । न तेण जीएण ववहारो ॥ ७९ ॥ व्याख्या—यज्जीतं सामाचारीविशेषोऽशोधिकरं न कर्ममलापनयनसहं पार्श्वस्थप्रमत्तसंयमतादिन्निः, पार्श्वस्थाः पूर्वोक्ताः प्रमादिनस्तत्प्रकारैर्बहुभिरप्यास्तामेकेन केनचिदाची-

र्णं प्रवर्तितं. न तेन जीतेन व्यवहारस्तीर्थप्रवृत्तिः, शतमप्यंधानां न पश्यतीति न्यायाज्जीतलक्षणस्यै-
व चायोगाच्छब्दप्रवृत्तिस्तु गौणवृत्त्यापि भवतीति गाथार्थः ॥ ७९ ॥ किंतु—

॥ मूलम् ॥—जं जीयं सोहिकरं । संवेगपरायणेण दंतेण ॥ एकेणवि आइन्नं । तेण उ
जीएण ववहारो ॥ ८० ॥ व्याख्या—यज्जीतं शोधिकरं संवेगपरायणेनोपलक्षणत्वाज्जीतार्थेन च दां-
तेंद्रियदमादेकेनाप्यास्तां बहुभिराचीर्णं, तेन, तुरेवकारार्थः पुनः संव्यवहार्यते, जीतेन व्यवहार एव प्र-
दीपकल्पत्वात्, उक्तं च—एकोवि नायवाई । अवलंबंतो विसुद्धववहारं ॥ सो होइ भावसंघो ।
जिणाण आणं अलंबंतो ॥ १ ॥ आचीर्णलक्षणं चेति—धिइसंघयणाईणं । मेराहाणिं च जा
णिउं थेरा ॥ सेह अगीयत्थाणं । ठवणा अइणाकप्पस्स ॥ १ ॥ अवलंबिऊण कज्जं । जं किंचि
आयरंति गीयत्था ॥ थोवावराहबहुगुण । सव्वेसिं तं पमाणंतु ॥ २ ॥ तस्मात्पार्श्वस्थाद्याचीर्णं नाच-
रेन्न शंसेदिति गाथार्थः ॥ ८० ॥ अत्रैवाभ्युच्चयमाह—

॥ मूलम् ॥—आणाए अवट्टंतं । जो उववूहिज्ज जिणवरिंदाणं ॥ तित्थयरस्स सुयस्स य ।
संघस्स य पच्चणीउ सो ॥ ८१ ॥ व्याख्या—जिनवरेंद्राणामाज्ञायामवर्तमानं य उपबृंहयेद् द्वादशा-

वर्तवंदनादिना स्तुयाद्वस्त्रपात्रादिना च सन्मानयेत स तीर्थंकरस्य श्रुतस्य संघस्य च प्रत्यनीकस्त्तत्प्रतिकूलवर्त्यनुमोदनादिति गाथार्थः ॥ ८१ ॥ अथ वस्त्रपात्राद्यासंशया मार्गगामिनं महर्द्धिकगृहस्थादिकमनुवर्तयंति ये तान्प्रत्याह—

॥ मूलम् ॥—किंवा देइ वराज । मणुज सुठुवि धणीवि भत्तोवि ॥ आणाइक्कमणं पुण । तणुयंपि अणंतडुहहेज ॥ ८२ ॥ व्याख्या—किं वा किमिव ददाति वराको मनुजः सुष्ठ्वप्यतिशयेन धन्यपि भक्तोऽपि किंचिद्वस्त्रपात्रादि, ददद्प्याज्ञातिक्रमणजनितापायापेक्षया न किंचिदित्यर्थः. आज्ञातिक्रमणं पुनस्तन्वपि स्वल्पमप्यक्षरपदाद्यरोचनमप्यनंतदुःखहेतुरनंतभवभ्रमणत्वादिति गाथार्थः ॥ ८२ ॥

॥ मूलम् ॥—तम्हा सइ सामड़े । आणाभट्ठंमि नो खलु जवेहा ॥ अणुकूलगेयरेहिं । अणुसट्ठी होइ दायवा ॥ ८३ ॥ व्याख्या—यस्मादाज्ञातिक्रमणमनंतदुःखहेतुस्तस्मात् सति सामर्थ्ये तद्व्यावर्तनंप्रति विद्यमानायां शक्तावाज्ञाभ्रष्टे आज्ञातिक्रमकारिणि नो खलुरप्यर्थे, नोपेक्षाप्यौदासीन्यमपि, आस्तां तदनुवर्तनं, कार्येति शेषः. अयमभिप्रायः—य एवाज्ञाभंगं विधास्यति स एवानंत-

दुःखभाग्भविष्यति, किमस्माकमिति बुद्ध्या नोदासितव्यं. यतः—आणाभंगं दहुं । मज्झत्था मुत्तिठं-ति जे तुसिणी ॥ अविहिअणुमोयणाए । तेसिंपि य होइ वयलोवो ॥ १ ॥ तेसिंपि य सामन्नं । भठं भठवया य ते होंति ॥ जे समणा कज्जाइं । वित्तारकाए कुवंति ॥ २ ॥ इति. तर्हि किं कर्तव्यमित्याह—अनुकूलैः प्रियैरितरैश्च निष्ठुरैर्वचोभिरिति गम्यं, अनुशिष्टिः शिक्षा भवति दातव्येति गाथार्थः ॥ ८३ ॥ ननु संप्रत्याज्ञातिक्रमकारिण एव महाजनपरिगृहीताश्च बहवस्तावदुपलभ्यंते, ततः कथमिदं कर्तुं शक्यमित्याशयवतामुपदिशति—

॥ मूलम् ॥—एवं पाएण जणा । कालाणुभावा इहं तु सवेवि ॥ णो सुंदरा जम्हा । आणाजुत्तेसु पडिबंधो ॥ ८४ ॥ व्याख्या—एवमिति परिदृश्यमानप्रकारेण प्रायेण बाहुल्येन जनाः साधुश्रावकादयः सर्वेऽपि कालानुभावाद् दुःषमाप्रभावादिह भरतक्षेत्रे, तुः पादपूरणे, नो सुंदरा भव्याः संभवंतीति योगः. यतः संप्रति ऽन्यतः प्रतिपन्नजिनशासना अपि बाहुल्येनाभव्या दूरभव्याश्चोक्ताः, इतिशब्दो वाक्यपरिसमाप्तौ, तस्मादाज्ञायुक्तेषु प्रतिबंधः, स्वल्पा अपि ये केचनाज्ञायां वर्तंते, ते ष्वेव गुरुबुद्ध्या बहुमानो विधेय इति भाव इति गाथार्थः ॥ ८४ ॥ आज्ञाविरहितेषु तर्हि का वा-

तैत्याह—

॥ मूलम् ॥—इयरेसुवि य पउसो । नो कायवो जवठ्ठिई एसा ॥ नवरं विवज्जणिज्जा । वि-
हिणा सयमग्गनिरएणं ॥ ७५ ॥ व्याख्या—इतरेष्वप्याज्ञाविकलेषु प्रद्वेषो मत्सरो न कर्तव्यो, यतो
जवस्थितिरेषा, यद्विचित्रकर्मपरिणतेरेव जघन्यमध्यमोत्तमैर्जंतुजिर्जाव्यमिति. नवरं केवलं विवर्जनी-
या आलापादिजिर्विधिना सूत्रनीत्या सदा मार्गनिरतेन समयोक्तनीतिवर्तिनेति गाथार्थः ॥ ७५ ॥

अत्रैव विशेषमाह—

॥ मूलम् ॥—अगीयादाइन्ने । खित्तेऽन्नत्थ ठिइ अजावंमि ॥ भावाणुवघायत्तणु—वत्तणाए ते-
सिं तु वसियवं ॥ ७६ ॥ व्याख्या—अगीत इत्येकदेशेऽपि समुदायावगमादगीतार्थः, ततश्च—गी-
यं मुणिएगठं । ठिइत्रं खलु वयंति गीयत्रं ॥ इतिवचनाज्ज्ञातो ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च
विदितोऽर्थो येन स गीतार्थः, न तथा पार्श्वस्थ इत्यर्थः. स आदिर्येषामवसन्नादीनां, तैराकीर्णे व्याप्ते
भावित इति यावत, क्षेत्रे नगरादावन्यत्र क्षेत्रांतरे, स्थीयते आजिरिति स्थितयोऽवस्थानकारणादि,
तासामजावेऽस्थानयोग्यक्षेत्रांतरे सति पार्श्वस्थादिजाविते वस्तव्यमेवेति भावः, तेषां पार्श्वस्थादीनां

तुर्विशेषेण दर्शयिष्यते च भावस्य चारित्रपरिणामस्यानुपघातेन मन·कालुष्यहेतुतत्कलहत्यागेने-ति हृदयं, अनुवर्तनया चानुकूल्येन वाङ्नमस्कारादिलक्षणेन पुनर्वक्तव्यमिति गाथार्थः ॥ ८६ ॥ अन्यथा दोषमाह—

॥ मूलम् ॥—इहरा सपरुवघाओ । उब्भोभाईहिं अत्तणो लहुया ॥ तेसिंपि पावबंधो । दुगंपि एयं अणिट्ठंति ॥ ८७ ॥ व्याख्या—इतरथा तदकरणे स्वपरोपघातः. तथा च उत्प्राबल्येन गता शोभा यस्मात्तदुब्भोभमात्मप्रदानं, तदादिभिरादिशब्दात्कलहादिभिरात्मनो लघुता लाघवं, तेषामपि पापबंधो गुणिजनप्रद्वेषात्, द्वयमपि चैतदनिष्टं. इति प्रक्रमसमाप्ताविति गाथार्थः ॥ ८७ ॥ निगमनमाह—

॥ मूलम् ॥—ता दव्वओ य तेसिं । अरत्तदुट्ठेण कज्जमासज्ज ॥ अणुयत्तणत्थमीसं । कायव्वं किंपि नो भावा ॥ ८८ ॥ व्याख्या—तत्तस्माद् द्रव्यत., तुरेवकारार्थे, तेषामरक्तदुष्टेन साधुनेति गम्यं. कार्यं ज्ञानचरणादिकमासाद्य अनुवर्तनार्थमीषन्नमस्कारमात्रादिकं कर्तव्यं, न पुन· किंचिदपि भावतः; तथा चात्रागम·—वायाए १ आलपत्ते २ । नमुक्कारो हत्थुस्सेहो य ३ सीसनमणं ४ च ॥

संपुछ्णए ५ ठणं ६ थोन्न—वंदणं ७ वंदणं वावि ८ ॥ १ ॥ परियायपरिसपुरिसं । खेत्तं कालं च आगमं नाउं ॥ कारणजाए जाए । जहारिहं जस्स जं जोग्गं ॥ २ ॥ एयाइं अकुव्वंतो । जहारिहं अरिहदेसिए मग्गे ॥ न जवइ पवयणजत्ती । अजत्तिमंताइया दोसा ॥ ३ ॥ अजक्त्यादयोऽभक्तिमद्द्वेषस्वार्थभ्रंशबंधनादयो दोषा इति गाथार्थः ॥ ८८ ॥ ननु पूर्वं मालापाद्यप्यमीजिः सार्धं तत्कथमिदमुच्यते ? सत्यमपवादमाश्रित्य, अथोत्सर्गापवादयोः कः कस्मात्सिध्यतीत्याह—

॥ मूलम् ॥—उन्नयमविरक निन्नस्स । पसिद्धी उन्नयस्स निन्नाउ ॥ इय अन्नोन्नावेक्का । उस्सग्गववाय दो तुल्ला ॥ ८९ ॥ व्याख्या—उन्नतमपेक्ष्य निम्नस्य प्रसिद्धिः, सन्नाव उन्नतस्य निम्नात्, ल्यप्लोपे पंचमी, निम्नमपेक्ष्येत्यर्थः, इत्येवमन्योन्यापेक्षावुत्सर्गापवादौ द्वावपि तुल्यौ, निम्नत्वोन्नतत्वपरत्वापरत्ववत्परस्परसव्यपेक्षितैवानयोः, न पुनः कश्चित्कुतोऽपि सिध्यतीति भावः. अत एव निशीथादिसूत्राणि सर्वाणि सापवादानि पठ्यंते. तथा च तत्रैवोक्तं—जावइया उस्सग्गा । तावइया चेव हुंति अववाया ॥ जावइया अववाया । तावइया चेव उस्सग्गा ॥ १ ॥ अतो द्वयोरपि भगवडुक्तत्वेन निर्जराहेतुत्वं, केवलमनयोर्विषयः सम्यग्विवेचनीय इति गाथार्थः ॥ ८९ ॥ अथ विस्त-

रप्रसंगं वाक्यखंडेन निरुंधन्नुक्तानुक्तार्थसंग्रहं संक्षिप्य शार्दूलेनाह—

॥ मूलम् ॥—किं बहुणा?—मा आयणह मा य मन्नह गिरं कुतित्थियाणं तहा। सुत्तुत्तिन्नकुबोहकुग्गहगहग्घत्थाणमन्नाणवि ॥ णाणिणं चरणुज्जुयाण य तहा किच्चं करेहायरा। निस्सेसं जणरंजणब्भुचियं लिंगाविसेसाणवि ॥ ९० ॥ व्याख्या—किं? न किंचिदित्यर्थः, बहुनोक्तेनेति शेषः, संक्षेपस्यैव प्रक्रांतत्वात्. मा आकर्णयत? कदाचिदाकर्णनेऽपि मा च मन्यंतामभ्युपगच्छत गिरं वाचं कुतीर्थिकानां शाक्यादीनां, तथा तेनैव प्रकारेण सूत्रोत्तीर्णोऽत एव कुत्सितो बोधस्तेन कुग्रहः कदभिनिवेशः स एव ग्रहस्तेन ग्रस्तानां स्वीकृतानामपि स्वयूथ्यानां गिरमिति सक्रियमिहापि संबध्यते. तथा च कल्पभाष्यं—

जो तं जगप्पईवेहिं। पणीयं सव्वभावपण्णवणं ॥ ण कुणइ सूयं पमाणं। न सो पमाणं पवयणम्मि ॥ १ ॥ ज्ञानिनां चरणोद्यतानां च, चकारो ज्ञानचरणयोः समुदितयोरेव प्रामाण्यमावेदयति. यदाह—नाणाहीणं सव्वं। णाणनं भणइ किंच किरियाए ॥ चरणनं किरियाए। तदुभयगा होय समत्तं ॥ इति. तथा सूत्रभणितप्रकारेण निःशेषं कृत्यं-कृतिकर्मादि कुरुत? आदरात सर्व-

प्रयत्नेन, लिंगमेवाविशेष उद्धरितं येषां, न पुनर्ज्ञानादि, तेषामपि जनरंजनार्थमुचितमालापनमस्कारादि कुरुतेति वृत्तार्थः ॥ ९० ॥ तथा—

॥ मूलम् ॥—गुरुकम्माण जियाणं । असमंजसचेट्ठियाणि दट्ठूण ॥ णिंदपओसं मणयंपि । सव्वहा संविवज्जेज्जा ॥ ९१ ॥ व्याख्या—गुरुकर्मणां जीवानामसमंजसचेष्टितानि, तथा प्रवचनप्रतिषिद्धाचरणानि दृष्ट्वा निंदां दोषन्नाषणं प्रद्वेषं मात्सर्यं मनागपीषदपि सर्वथात्मपरोन्नयौ सम्यगंतःकरणशुद्ध्या विवर्जयतेति गाथार्थः ॥ ९१ ॥ अन्यच्च—

॥ मूलम् ॥—डुस्समकालसरूवं । कम्मवसित्तं च तेसि जीवाणं ॥ न्नावेह कुणह गुरु—आयरं च गुणवंतपत्तेसु ॥ ९२ ॥ व्याख्या—डुःषमकालस्वरूपं कर्मवशित्वं च तेषां डुःषमासमयोद्भवानां जीवानां न्नावयत चिंतयत, अत एव डुर्लन्नत्वाद्गुणवतां कुरुत गुर्वादरं च, गुणवत्पात्रेषु गुणवत्प्रतिपत्तिमितरवर्जनं च, पुनःपुनरुपदिशन्निदमेवैहिकामुष्मिकार्थसाधकमित्यावेदयतीति गाथार्थः ॥ ॥ ९२ ॥ इति श्रीदेवन्नद्रसूरिविरचिते दर्शनशुद्धिविवरणे साधुतत्वं समाप्तं ॥ श्रीरस्तु ॥

नमो नवतत्वविदे, अथ मूलद्वारगाथाक्रमप्राप्तस्य पंचमतत्वस्य व्याख्या प्रतन्यते, संबंधश्च पूर्वेण सहास्य—पूर्वं—

॥ मूलम् ॥—जीवाजीवा पुन्नं । पावासव संवरो य निज्जरणा ॥ बंधो मुक्को य तहा । नवतत्ता हुंति नायवा ॥ १ ॥ व्याख्या—तत्र जीवितवंतो जीवंति जीविष्यंति चेति जीवा, व्युत्पत्तिनिमित्तं चेदं, प्रवृत्तिनिमित्तं तु संविल्लक्षणत्वमेव, तेन सिद्धैर्न व्यभिचारः, ततो जीवाश्च तद्विपरीता अजीवाश्चेति द्वंद्वः, पुण्यं शुभप्रकृतिरूपं तीर्थकरनामादि. पापमशुभं मिथ्यात्वादि विभक्तिलोपश्च प्राकृतत्वात्, एवमुत्तरत्रापि, आश्रवत्यागच्छत्यनेन कर्मेत्याश्रवः कर्मोपादानहेतुर्हिंसादिः. संवरणं संवरो गुप्त्यादिभिराश्रवनिरोधश्च, चः समुच्चये, निर्जरा विपाकात्तपसो वा कर्मपरिशाटः, बंधो जीवकर्मणोरत्यंतसंश्लेषः, मोक्षः कृत्स्नकर्मक्षयात स्वात्मन्यवस्थानं, चकारोऽवधारणे, एतान्येव तत्वानि, न पुनः सुगतसांख्योलूकादिपरिकल्पितानि, तेषां विचाराक्षमत्वात्. तथा तेनागमोक्तप्रकारेण नवतत्वानि, प्राकृतत्वात् पुंसो निर्देशः, भवंति ज्ञातव्यानि. इह च तत्वानां नवसंख्यत्वं मध्यमप्रस्थानापेक्षया, अन्यथा संक्षेपापेक्षया जीवाजीवयोः, एवं च बंधादीनामंतर्भावसंभवाद् द्वित्वमेव. विस्तर-

स्तु तदुत्तरोत्तरभेदविवक्षयानंत्यमेव स्यादिति गाथासंक्षेपार्थः ॥ १ ॥ अथ प्रत्येकमेतान् विवरतुकामो यथोद्देशं निर्देश इति न्यायादादौ जीवतत्वं विवृणोति—

॥ मूलम् ॥—एगविहदुविहतिविहा । चउहा पंचविहछव्विहा जीवा ॥ चेयण तस इयरेहिं । वेयगइकरणकाएहिं ॥ २ ॥ व्याख्या—एकविधद्विविधत्रिविधाश्चतुर्विधाः पंचविधषड्विधा जीवा भवंतीति शेषः. कथमिति क्रमेणाह—चेयणेत्यादि, चेतनया एकविधाः. सर्वसत्वानां तदव्यभिचारात्. त्रसाश्च चरंत इतरे च स्थावरास्तेषां भावस्तत्त्वं, तेन च द्विविधाश्चरत्वाचरत्वलक्षणसंगृहीतत्वात् सकलसंसारिसत्वराशेः, एवमुत्तरत्रापि लक्षणानां व्यापकत्वमभिधेयं, इह च सूत्रे लुप्तभाव प्रत्ययं पदमुपात्तमिति. वेदैः स्त्रीपुंनपुंसकैस्त्रिविधाः, गतिभिर्नारकतिर्यग्नरामरलक्षणाभिश्चातुर्धाः, करणैः स्पर्शनादिभिरिंद्रियैः पंचविधाः, कायैः पृथ्वीकायादिनिकायैः षड्विधाः. इह च सर्वजीवानां चेतनावत्त्वेनैकरूपाणामेव सत्त्वं, संसारिसत्वेषु चरत्वाचरत्वाद्युपाधिद्विविधत्वादिकमवसेयमिति गाथार्थः ॥ २ ॥ तथा—

॥ मूलम् ॥—पुढवी आऊ तेऊ । वाऊ वणस्सइ तहेव बेइंदी ॥ तेइंदिय चउरिंदिय ।

पंचिंदिय भेयजं नवहा ॥ ३ ॥ व्याख्या—पृथिव्यापस्तेजोयोगात्तेजोऽग्निर्वायुर्वनस्पतिस्तथैव द्वींद्रियास्त्रींद्रियाश्चतुरिंद्रियाः पंचेंद्रियाः सोपस्कारत्वादिति भेदान्नवधा जीवा भवंतीति शेषः. ननु पृथिव्यादीनि जीवशरीराणि काठिन्यादिलक्षणानि, जीवाः पुनरुपयोगलक्षणाः, तत्कथं पृथिव्याप इत्यादिभेदतो नवधा जीवा इति? उच्यते—जीवशरीरयोरन्योन्यानुगतत्वेन विभागाभावादेवमुक्तं, न चैतदनार्षं, यत उक्तं—अनुन्नाए गयाणं इमं च तं चत्ति विभजाणमकुत्तमित्यादि. एवमन्यत्रापि यथासंभवमूह्यमिति गाथार्थः ॥ ३ ॥ अन्यच्च—

॥ मूलम् ॥—एगिंदिय सुहमियरा । सन्नियरपणिंदिया सबितिचउ ॥ पज्जत्तापज्जत्ता—भेएण चउद्दस ठाणा ॥ ४ ॥ व्याख्या—एकेंद्रियाः सूक्ष्मेतराः सूक्ष्मनामकर्मोदयात्सूक्ष्माः सकललोकव्यापिनो निरतिशयानामदृश्याः, इतरे बादरनामकर्मोदयाद् बादराः प्रतिनियतस्थानवर्तिनः, तथा संज्ञिनश्च मनोविज्ञानवंतः, इतरे चासंज्ञिनः पंचेंद्रियाः, सबितिचउत्ति सूचनात्सूत्रस्य सह द्वींद्रियत्रींद्रियचतुरिंद्रियैर्वर्तंत इति, द्वींद्रियत्रींद्रियचतुरिंद्रियादिभिः सहिताः पूर्वे इत्यर्थः, ते च पर्याप्तापर्याप्तभेदेन चतुर्दश, दीर्घत्वं प्राकृतत्वात्. समुदायोपचाराद्भूतग्रामा जीवस्थानानीत्यर्थ इति

गाथार्थः ॥ ४ ॥ पुनः प्रकारांतरेण जीवभेदानेवाह—

॥ मूलम् ॥—पुढविदगअगणिमारुय—वणसयणंता पणिंदिया चउहा ॥ वणपत्तेया विगला । डुविहा सवेवि बत्तीसं ॥ ५ ॥ व्याख्या—पृथिव्युदकाग्निमारुतानंतवनस्पतयः, इह तु विचित्रत्वात्सूत्रस्य विशेषणस्य परनिपातः, पंचेंद्रियाश्च प्रत्येकं चतुर्धा, चकारमंतरेणापि समुच्चयोऽत्र गम्यते, इतीह च शिष्येनोक्तं, यथा—अहरहर्नयमानो । गामश्वं पुरुषं पशुं ॥ वैवस्वतो न तृप्यंति । सुराया इव दुर्मदी ॥ १ ॥ तत्र पृथिव्यादयः सूक्ष्मबादरपर्याप्तापर्याप्तभेदात्पंचेंद्रियास्तु संज्ञिअसंज्ञिपर्याप्तापर्याप्तभेदादिति षण्णां चतुर्भिस्ताडनाच्चतुर्विंशतिः, तथा वणपत्तेयत्ति सूत्रत्वादेव प्रत्येकवनस्पतयो 'विगलत्ति' विकलेंद्रिया द्वित्रिचतुरिंद्रिया द्विविधा इत्यष्टौ, सर्वेऽपि पूर्वोत्तरसंमीलनाद् द्वात्रिंशदेते सर्वेऽपि सामान्येन व्यवहार्यव्यवहारिभेदाद् द्विविधाः, तत्र सूक्ष्मानंतवनस्पतयो व्यवहारिणोऽव्यवहारिणश्च, शेषास्तु सर्वेऽपि व्यवहारिण एवेति कृतमात्मनो भेदप्रपंचनं प्रसंगात्, स्वरूपं ब्रूमः, तथाहि—आत्मा शरीरव्यापी, तेन सह कथंचिद्भिन्नाभिन्नः, प्रतिदेहं च नैक एव, एकस्य सुखदुःखाद्यनुभवेऽन्येषां तथानुपलंभात्. न तु विभुः, शरीर एव तल्लिंगभूतचैतन्योपलंभात्, नाप्यंगुष्ठपर्वाद्यधि-

त्रापि, स्थिबुकश्च जलबिंदुः, सूची च प्रसिद्धा, पताका च ध्वजः, अनेकानि च विचित्रद्रव्याणि तेषां संस्थानान्याकारा येषां तानि, तथा क्रमेण पृथिव्युदकाग्निमारुतवनस्पतीनां, चः पुनरर्थे, संस्थानानि वपुःपुद्गलरचनाविशेषाः, प्राकृतत्वात् पुंस्त्वं, तदिदमत्र तात्पर्यं—पृथिवीजीवशरीरसंस्थानं मसूरकाकारजीवतनुसंस्थानं स्तिबुकाकारमित्यादि नेयमिति गाथार्थः ॥ ६ ॥ अथ जीवाधिकारे एव यावद्दूरादिंद्रियाणां स्वविषयग्राहकत्वमाह—

॥ मूलम् ॥—संगुलजोयणलक्खो । समहिअ नवबारसुक्कसो विसओ ॥ चक्खुत्तियसोयाणं । अंगुलअसंखभागियरो ॥ ७ ॥ व्याख्या —स्वांगुलमात्मांगुलं तेन निष्पन्नानि योजनानि तेषां लक्षं समधिकं सातिरेकं, नव द्वादश च व्याख्यानात् स्वांगुलयोजनानीत्यत्रापि पदद्वयेऽपि संबध्यते, उत्कृष्यत इत्युत्कर्षः सर्वबहुरित्यर्थः, विषयो ग्राहणयोग्यता क्रमेण चक्षुषश्च, त्रयाणां परिशिष्टः स्पर्शनरसनघ्राणानां समूहत्रिकं च, श्रोत्रं च, तेषामिह च योजनलक्षादीनामाकाशदेशत्वे नेंद्रियाविषयत्वात् तद्गतपुद्गलद्रव्याणामेव विषयत्वमुन्नेयं, आधाराधेययोरभेदोपचाराचेदं भणनमिति. अंगुलासंख्यभागवर्ती त्वितरो जघन्यविषयः, सर्वेषां व्याख्यानान्नयनवर्जानामिति ज्ञेयं, चक्षुषस्तु संख्येयभाग-

वर्त्येव, अतिसन्निकृष्टस्य तेनानुपलंभात्, तथा च भाष्यं—अवरमसंखेज्जंगुल—भागाउ नयणव-
ज्जाणं ॥ संखेज्जइभागाउ । नयणस्स मणस्स न विसयपमाणं ॥ १ ॥ इति. तथेह समधिकः स्वां-
गुलयोजनलक्षार्धचक्षुर्विषयोऽभासुरद्रव्यमधिकृत्य, भासुरं तु द्रव्यमेकविंशतियोजनलक्षेभ्योऽपि परतः
पश्यंति, यथा पुष्करद्वीपार्धे मानुषोत्तरनगप्रत्यासन्नवर्तिनः कर्कसंक्रांतौ सूर्यबिंबं, तथा चोक्तं—ल-
क्खेहिं एगवीसाए । साइरेगेहिं पुक्खरद्धम्मि ॥ उदये पिच्छंति नरा । सूरं उक्कोसए दिवसे ॥ १ ॥
इति गाथार्थः ॥ ७ ॥ अथ जीवगतप्राणादिद्वारप्रतिपादयिषया गाथामाह—

॥ मूलम् ॥—पाणा पज्जत्तीउ । तणुमाणं आउयं च कायठिई ॥ लेसासंजमजोणी । एए
सिं जाणियव्वाइं ॥ ८ ॥ व्याख्या—प्राणंत्येभिरिति प्राणा इंडियादयः, पर्याप्तय आहारादि ग्रहणा
दि सामर्थ्यानि, तनुमानं शरीरपरिमाणं, एति याति चेत्यायुर्जीवितं, चशब्दोऽनुक्तसमुच्चये सर्वांते
च संनत्स्यते. काये पृथिवीकायादिनिकाये स्थितिः, लेश्याः कृष्णादिद्रव्यसाचिव्यादात्मनः परिणा-
मविशेषाः, यदाहु—कृष्णादिद्रव्यसाचिव्यात् । परिणामो य आत्मनः ॥ स्फटिकस्येव तत्रायं । ले
श्याशब्दः प्रयुज्यते ॥ १ ॥ संयमः सावद्याद्विरतिः. युवंति निश्रीभवंति कार्मणशरीराणि औदारि-

कादिशरीरैरासु जंतवो जुषंते सेवंते ता इति वा योनय उत्पत्तिस्थानानि, चकाराद्योगोपयोगगुणस्थानमार्गणास्थानानि च, एतेषां प्रस्तावाज्जीवानां ज्ञातव्यानीति द्वारगाथार्थः ॥ ८ ॥ अथ यथोद्देशं निर्देश इति न्यायात्प्रथमं प्राणद्वारं विवृणोति—

॥ मूलम् ॥—पंचिंदियतिविहबलं । नीसासूसास आउयं चेव ॥ दस पाणा पन्नत्ता । तेसिं विघाउं भवे हिंसा ॥ ९ ॥ व्याख्या—पंचेंद्रियाणि स्पर्शनादीनि, लुप्लोपः प्राकृतत्वात्, एवमुत्तरत्रापि, त्रिविधं बलं मनोवाक्कायजनितः शक्तिविशेषः, उल्लसति ह्येतत्संबंधादात्मनः सामर्थ्यविशेषः ८, निःश्वसनं निःश्वासोऽधःपवनसंचारः, उच्छ्वासस्तूर्ध्वं, एताभ्यामेकमेव रूपं, द्वयोरपि शारीरवायुविशेषत्वात् ९, आयुर्जीवितं १०, चैवेति समुच्चये. एते दश प्राणाः प्रज्ञप्तास्तीर्थकृदादिभिः, एतद्व्यतिरेकेण जीवनाभावात्, अत एव तेषां विघातो वियोजनं भवेद्धिंसा, न तु सर्वथा जीवविनाशः, तस्याप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वात्, इह चैकेंद्रियाणां स्पर्शनेंद्रियकायबलनिःश्वासोच्छ्वासलक्षणाश्चत्वारः, द्वींद्रियाणां रसनवाग्बलसहिताः षट्, त्रींद्रियाणां घ्राणयुताः सप्त, चतुरिंद्रियाणां चक्षुर्लब्धिताष्टौ, असंज्ञिनां श्रवणोपेता नव, संज्ञिनां तु संपूर्णा दश प्राणा इति गाथार्थः ॥ ९ ॥ अथ प-

र्याप्तीः प्राह—

॥ मूलम् ॥—आहारसरीरिंदिय—पज्जत्ती आणपाणभासमणे ॥ चत्तारिपंच छविय । एगिं-
दियविगलसन्नीणं ॥ १० ॥ व्याख्या—तथाविधाहारपुद्गलग्रहणपरिणमनसामर्थ्यमाहारपर्याप्तिः १,
औदारिकादिशरीरत्रयप्रायोग्यपुद्गलानामादाने तत्तद्रूपतया परिणमने च सामर्थ्यं २, इंद्रियपर्याप्तिः
३, आनापानोचितद्रव्याणां ग्रहणे तद्रूपतया व्यापारणे च शक्तिरानापानपर्याप्ति ४, सत्यासत्यादिच-
तुर्विधभाषाहेतुपुद्गलानां ग्रहणे तद्रूपतया परिणमने निस्सरणे च सामर्थ्यं भाषापर्याप्तिः ५, मनः-
समुचितपुद्गलानामवलंबने मनोरूपतया परिणमने मनने च सामर्थ्यं मनःपर्याप्ति ६. इह च कृ-
तद्वंद्वस्याद्यपदत्रयस्य पर्याप्तिशब्देन सह षष्ठीतत्पुरुष उत्तरपदलये च द्वंद्वैकवद्भावाद्विषयसप्तम्येकवच-
नं, इह च वैक्रियाहारकशरीराणां शरीरपर्याप्तिरांतर्मौहूर्तिकी, शेषास्तु सामयिक्यः, औदारिकशरी-
रिणां त्वाहारपर्याप्तिरेव सामयिकी, शेषास्तु प्रत्येकमांतर्मौहूर्तिक्य इति.

अथ पुनः केषां कियत्य इत्याह—चतस्र आहारशरीरेंद्रियानापानलक्षणाः, पंच भाषान्विताः,
षडपि च मनःसमन्विताः. क्रमेणैकेंद्रियाश्च विकलाश्च द्वित्रिचतुरिंद्रियासंज्ञिस्वरूपाः संज्ञिनश्च, ते-

षां, एता अपि च यथास्वं परिपूर्णाः पर्याप्तनामकर्मोदयवतामेव भवंति, केवलमपर्याप्ता अपि ये म्रियंते, तेऽप्युच्छ्वासादिपर्याप्तिभिरेव विज्ञेयाः, न तु शरीरेंद्रियपर्याप्तिभ्यां, यतः परभवायुष्कं बध्ध्वा म्रियंते तच्च शरीरेंद्रियादिपर्याप्त्यपर्याप्तैर्बध्यत इति गाथार्थः ॥ १० ॥ आहारपर्याप्तिरभिहिता, तत्किं जीवाः सर्वेऽप्याहारका एव किंवा नेत्याह—

॥ मूलम् ॥—विग्गहगइमावन्ना । केवलिणो समुहया अजोगीया ॥ सिद्धा य अणाहारा । सेसा आहारगा जीवा ॥ ११ ॥ व्याख्या—समुदायार्थः स्पष्टः, अवयवार्थस्त्वयं—विग्रहणं विग्रह आनुपूर्वीकर्मोदयाद्वक्रं स्खलनं वक्रीभवनमिति यावत, तेन गतिर्विग्रहगतिः, इह हि भवांतरं गछतामसुमतां द्वयीगतिः, ऋजुर्वक्रा च, तत्र जीवपुद्गलयोरनुश्रेणिगमनाद्यदा श्रेणिस्थमुत्पादस्थानं भवति तदर्जुगत्यैव एकोनेन समयेन गछति तस्मिन्नेव चाहारग्रहणं. यदा तु विश्रेणिस्थं तदा वक्रमेकं द्वे त्रीणि वा संभवंति, केचिच्चत्वारीति भणंति. तत्रैकं वक्रं द्वाभ्यां, द्वे तु त्रिभिः, त्रीणि चतुर्भिः चत्वारि तु पंचभिः समयैः, तत्पुनरिदं—

विदिसाउ दिसिं पढमे । बीए पविसइ णाभिमज्झंमि ॥ उड्ढं तइए तुरिये य । नीइविदिसं

ड पंचमए ॥ १ ॥ इति तत्र चाद्यसमये ओक्तव्यशरीराहारः, पर्यंतसमये त्वागामिशरीराहार आहा-
रपर्याप्तिसमयत्वात्तस्य, मध्यमेषु त्वेकद्वित्रिसमयेषु यथाक्रमं द्विवक्रादिषु केवलकार्मणयोग्यानाहार-
को व्याख्यातः प्रज्ञप्त्यभिप्रायस्त्वासमयात्प्रभृत्येवानाहारकस्त्रिवक्रैव च विग्रहगतिरिति. तथा केवलि-
नः सम्यक् समंतत उत्प्राबल्येनात्मप्रदेशान् घ्नंति प्रतिक्षिपंतिस्मेति, यदिवा घ्नंति वेद्यमानगोत्रपुद्ग-
लान् शातयंतिस्मेति समुद्घताः, सूत्रत्वादल्लोपः, समुद्घातं गता इत्यर्थः. दंडादि-

स चेद्धमुत्पन्नदिव्यज्ञान आयुषोऽल्पत्वं वेदनीयस्य प्राचुर्यमवधार्य तत्समतापादनाय मौहूर्तिकमुदीर-
क्रमेण चतुर्दशरज्ज्वात्मकं लोकमात्मप्रदेशैरापूरयति. तत्र प्रथममेवावर्जीकरणमांत-
णावलिकायां कर्मप्रक्षेपव्यापाररूपमन्येति, तदनु—प्रथमे समये दंडं । ( स्वदेहविष्कंभमूर्ध्वमधश्च
लोकांतगामिनं ) कपाटमथ चोत्तरे तथा समये ॥ मंथनमथ तृतीये । लोकव्यापी चतुर्थे तु ॥१॥
संहरति पंचमे त्वं—तराणि मंथानमथ पुनः षष्ठे ॥ सप्तमके तु कपाटं । संहरति ततोऽष्टमे दंडं ॥
॥ २ ॥ इह जीवप्रदेशानां दंडतया प्रक्षेपे संहारे च औदारिककायव्यापारादौदारिककाययोग एव,
द्वितीयषष्ठसप्तमेषु पुनः प्रदेशानां प्रक्षेपसंहारयोरौदारिके तस्य च बहिः कार्मणे वीर्यपरिस्पंदादौदा-

रिककार्मणमिश्रः, तृतीयचतुर्थपंचमेषु तु बहिरौदारिकात्कार्मणकायव्यापारादसहायः कार्मणः, तस्मिन्नेव च समयत्रयेऽनाहारकः, तथा यद्यपि मंथकरणे कपाटन्यायेनौदारिकस्यापि व्यापारः संजाघ्यते, तथापि कार्मणशरीरयोगी चतुर्थके पंचमे तृतीये वेति वचनादसौ कथंचिन्नास्तीति मंतव्यमिति. योगिनो मनोवाक्कायव्यापारवंतो न तथा निरुद्धयोगत्वादयोगिनः शैलेश्यवस्थामास्थिताः, तदध्यारोहणक्रमश्चायं—

इह केवलज्ञानप्रादुर्भावादनंतरमंतर्मुहूर्तादिं देशोनपूर्वकोट्यंतं कालं केवली विहृत्यांतर्मुहूर्तावशेषायुः सूक्ष्मक्रियमप्रतिपातिशुक्लध्यानतृतीयभेदं ध्यायन् योगनिरोधमारिप्सुः प्रथममेव पर्याप्तमात्रजघन्यमनोयोगिसंज्ञिमनोद्रव्यस्तद्व्यापारेभ्योऽसंख्यगुणविहीनानि मनोद्रव्याणि तद्व्यापारं च निरुंधानोऽसंख्यसमयैस्तत्सर्वनिरोधं करोति. उक्तं च—पज्जत्तमित्तसन्निस्स । जत्तियाइं जहन्नजोगिस्स ॥ हुंति मणोदव्वाइं । तव्वावारो य जंमित्तो ॥ १ ॥ तदसंखगुणविहीणे । समये समये निरुंभमाणो सो । मणसो सव्वनिरोहं । कुणइ असंखेज्जसमएहिं ॥ २ ॥ तदनु च प्रथमसमयोत्पन्नसूक्ष्मपनकजघन्यकाययोगतोऽसंख्यगुणहीनं काययोगं प्रतिसमयं निरुंधन् देहत्रिभागं च मुंचन्नसंख्येयसमयै-

रेव सर्वं निरुणद्धि. उक्तं च—तत्तोय सुहुमपणगस्स । पढमसमउववन्नस्स ॥ जो किर जहन्नजो-
गो । तयसंखेज्जगुणहीणमेक्केक्के ॥ १ ॥
रुंभइ स कायजोगं । संखाइएहिं चेव सम-
समए निरुंभमाणो । देहतिभागं च मुंचंतो ॥ एवं योगत्रयनिरोधं विधाय समुच्छिन्न-
एहिं ॥ २ ॥ तो कयजोगनिरोहो । सेलेसीभावणामेई ॥ इत्येवंस्वरूपह्रस्वाक्षरपंचकस्वल्पप्रयत्नाद्भुता-
क्रियमनिवर्तिशुक्लध्यानचतुर्थभेदं ध्यायन् ' अइउऋलृ ' इत्येवंस्वरूपह्रस्वाक्षरपंचकस्वल्पप्रयत्नाद्भुता-
क्रियमनिवर्तिशुक्लध्यानचतुर्थभेदं ध्यायन् तस्येयमवस्थेति व्युत्पादि-
विलंबितोच्चारकालं शैलेश इव शैलेशो मुनिर्निरुद्धयोगतयात्यंतस्थैर्येण तस्येयमवस्थेति व्युत्पादि-
तशब्दां शैलेशीमनुभवति, तस्यामवस्थायामयोग्यनाहारकश्च भवतीति. तत्र च वेद्यायुर्नामगोत्रस-
त्कर्माणि युगपत्क्षपयत्यनेन न्यायेन—तय संखेज्जगुणाए । गुणसेढीए रइयं पुराकम्मं ॥ समए
समए खवयं । कम्मं सेलेसिको तेण ॥१॥ तय संखेज्जगुणा इति. इहैकादश गुणश्रेणयस्तथाहि—
सम्यक्त्वे १ देशविरतौ २ विरतौ ३ अनंतानुबंधिवियोजने ४ दर्शनक्षपणे ५ शमने ६ उप-
शांतमोहत्वे ७ क्षपकत्वे ८ क्षीणमोहत्वे ९ सयोगिनि १० अयोगित्वे ११ चेति. ततश्च तस्याः स-
योगिगुणश्रेणेर्दलिकान्यपेक्ष्यासंख्यगुणेति—सव्वं खवेइ तं पुण । निल्लेवं किंचिदुवरिमे समये ॥

किंचिच्च होइ उवरिमेत्ति. ततः—देहादिनिर्मुक्तः । प्राप्यायुःश्रेणिवीथिमस्पर्शी ॥ समयेनैकेनावि-
ग्रहेण गत्वोर्ध्वमप्रतिघ ॥ १ ॥ सिद्धिक्षेत्रे विमले । जन्मजरारोगमरणनिर्मुक्तः ॥ लोकाग्रगत सि-
ध्यति । साकारेणोपयोगेन ॥ २ ॥ इति कृतं प्रसंगेन. एवमेते सितं बद्धमिहाष्टविधं कर्म तदाध्मा
तं भस्मसाद्भूतमेषामिति सिद्धा ध्यानानलनिर्दग्धाष्टकर्मैंधनाः, उक्तं हि—सियं धत्तत्ति सिद्धस्स ।
सिद्धत्तमुवजायइ ॥ इति. ते चानाहारकाः, प्रथमश्चकारः पूर्वेषां सिद्धेभ्यो वैलक्षण्यख्यापकः, द्वि-
तीयश्च समुच्चये, शेषा आहारयंतीत्याहारका इति गाथार्थः ॥ ११ ॥ सप्रसंगं पर्याप्तिद्वारमभिहित-
मथ तनुमानावसरः, तत्र पृथिवीकायानां तावदाह—

॥ मूलम् ॥—अद्दामलयपमाणे । पुढवीकाए हवंति जे जीवा ॥ ते पारेवयमित्ता । जंबुद्दी-
वे न माइज्जा ॥ १२ ॥ व्याख्या—सुगमा, न वरमार्द्रामलकं पीलुवृक्षमयूरस्तथा स्थूलकल्पनैवेयं
मुग्धधियां सुखाववोधाय, यथा पारापतमात्राणि यदि तेषां शरीराणि स्युस्तदा जंबूद्वीपे न मायुरि-
ति. यावता ततो लघुतरशरीरा अपि संख्यातद्वीपसमुद्रेष्वपि च नैव मायुः, न चैतन्निरुपपत्तिकं, अ-
मी ह्यसंख्या उत्कृष्टसंख्येयकमपि चानुयोगद्वारेष्वनवस्थितशलाकाप्रतिशलाकामहाशलाकापल्यसर्ष

पैः प्ररूपयता एक एव चरमोऽनवस्थितपल्यः संख्येयद्वीपसमुद्रप्रमाणः प्रतिपादित इति गाथार्थः ॥ १२ ॥ संप्रत्यपामाह—

॥ मूलम् ॥—एगम्मि उदगबिंदुम्मि । जे जीवा जिणवरेहिं पन्नत्ता ॥ तेवि य सरसवमित्ता । जंबूद्दीवे न मायंति ॥ १३ ॥ व्याख्या—गतार्था, केवलमुदकबिंदुर्यो वालाग्रेऽवतिष्ठते, सर्षपमात्रमाणेन चात्र पृथिवीकायिकशरीरेभ्योऽमीषां सूक्ष्मत्वमाह, एवमुत्तरोत्तरसूक्ष्मत्वं, तेजोवाय्वनंतवनस्पतिशरीरेष्वपि विज्ञेयं, तत्पुनरसंख्येयगुणहीनतयेति ॥ १३ ॥ ननु यद्येवमतिसूक्ष्माणि पृथिव्यादिशरीराणि तत्कथं मांसचक्षुषः पश्यंतीत्याह—

॥ मूलम् ॥—एगस्स दुण्ह तिण्हव । संखेज्जाण जाव ण पासिउं सक्का ॥ दीसंति सरीराइं पुढविजियाणं असंखेज्जा ॥ १४ ॥ व्याख्या—विभक्तिव्यत्ययादेकं द्वे त्रीणि वा यावत्संख्येयानि शरीराणीति योगः, द्रष्टुं न शक्ताश्चर्मचक्षुष इति शेषः तर्हि कथमित्याह—दृश्यंते शरीराणि पृथिवीजीवानामसंख्येयानि समुदितानीत्यर्थः इति गाथार्थः ॥ १४ ॥ अन्येषामतिदेशमाह—

॥ मूलम् ॥—आउतेउवाउ । एसिं सरीराणि पुढविजुत्तीए ॥ दीसंति वणसरीरा । दीसंति अ-

संखसंखेज्जा ॥ १५ ॥ व्याख्या—आपस्तेजोवायुः, किमेषां शरीराणि पृथिवीयुक्त्या दृश्यंतेऽसंख्येयानि मिलितानीत्यर्थः. तथा ' वणत्ति ' वनस्पतिजीवशरीराणि दृश्यंतेऽसंख्येयानि संख्येयानि च, कोऽर्थः—साधारणवनस्पतिनामसंख्यानि, प्रत्येकशरीराणां त्वसंख्यानि केषांचित्, केषांचित्तु संख्येयानीति. इह च प्रत्येकवनस्पतिं विमुच्यैकेंद्रियाणां बादराणामंगुलासंख्यभाग एवोत्कृष्टतो जघन्यतश्च तन्मानं सूक्ष्माणामप्येतदेव, केवलमेतदसंख्येयकं लघुतरमवसेयं, प्रत्येकशरीराणां तूत्कृष्टतो योजनसहस्रं साधिकं, जघन्यतस्त्वंगुलासंख्यभागः, एतत्पुनरसंख्यसंख्येयानि च दृश्यंते इति ब्रुवाणेन सूचितं, यद्येवं द्वींद्रियादीनां किमिति तनुमानं नाभिहितं? सत्यं, अमीषां लोचनगोचरत्वेन सुज्ञानत्वात्, अस्माभिस्तु स्थानाशून्यार्थं किंचिदुच्यते—

तत्र सर्वेषामपि जघन्यतस्तावदंगुलासंख्यभागः, स पुनरपर्याप्तावस्थानां प्रारंभकाले, उत्कृष्टतस्तु द्वींद्रियाणां द्वादश योजनानि, त्रींद्रियाणां गव्यूतत्रयं, चतुरिंद्रियाणां गव्यूतचतुष्टयं, पंचेंद्रियाणां तिरश्चां समूर्छिमानां गर्भजानां च योजनसहस्रं, मनुष्याणां तु संमूर्छिमानामंगुलासंख्यभागो, गर्भजानां तु गव्यूतत्रयं, देवनां सप्त नारकाणां पंचधनुःशतीत्यलं प्रसंगेन, विस्तरार्थिना तु संग्रहण्या-

दिग्ग्रंथान्वेषणं विधेयमिति गाथाचतुष्टयार्थः ॥ १५ ॥ संप्रत्यायुर्द्वारं विभणिषुर्गाथायुग्ममाह—

॥ मूलम् ॥—बावीससहस्सा सत्त—सहस्साइं तिन्निहोरत्ता ॥ वाए तिन्नि सहस्सा । दसवा

ससहस्सिया रुक्खा ॥ १६ ॥ संवच्छराणि बारस । राइंदिय हुंति अउणपन्नासा ॥ छम्मास तिन्निप-

लिया । पुढवाईणं ठिइ उक्कोसा ॥ १७ ॥ व्याख्या—वातवृक्षयोः साक्षादभिधानादंते च पृथिव्या-

दीनामिति गणनात्पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपंचेंद्रियाणां नवानां क्रमेणैतदायुरुत्कृष्टमवगंत-

व्यं. तथा ' दसवाससहस्सिया ' इत्यत्रोपात्तो वर्षशब्दः प्रथमगाथायां ' तिन्निहोरत्ता ' इत्येतद्दि-

मुच्य सर्वत्र संबध्यते. वृक्षग्रहणं च वनस्पतिमध्ये वृक्षाणामेवैतदायुर्भवतीति ज्ञापयति. न तु व-

ट्व्यादीनां निरुपद्रवस्थानेषु च सर्वेषामेतदायुरवसेयं. जघन्यतस्तु सर्वेषामनंतवनस्पतीनामुत्कर्षतोऽ

पि चांतर्मुहूर्तमिति गाथाद्वयार्थः ॥ १६ ॥ १७ ॥ अथ कायस्थितिमाह—

॥ मूलम् ॥—असंखोसप्पिणि—सप्पिणीउ एगिंदियाण चउ ॥ चउण्हं ता चेव ऊ । व-

वणस्सईए उ बोधवा ॥ १८ ॥ व्याख्या—अवसर्पति प्रतिसमयं कालप्रमाणं जंतूनां शरीरायुर्बलबु-

द्ध्यादिकमपेक्ष्य ह्रासमनुभवंत्यवश्यमित्यवसर्पिण्यश्च दशसागरोपमकोटाकोटीपरिमाणाः, उत्सर्पत्युत्क

न्यायतो वृद्धिमनुभवंत्यवश्यमित्युत्सर्पिण्यश्च तावत्प्रमाणा एव, उत्लोपः सूत्रत्वात. ततोऽसंख्यश ब्दस्यानेन सह कर्मधारयेऽसंख्यावसर्पिण्युत्सर्पिण्य एकेंडियाणां चतुर्णां पृथिव्याप्तेजोवायूनां, ताश्चै- वावसर्पिण्युत्सर्पिण्योऽनंताः. वनस्पतेः पुन:, स्त्रिया निर्देशः प्राकृतत्वात्, बोधव्या. इहाद्यौ तुशब्दौ पादपूरणे. तथा चोक्तं—तुशब्दो विशेषणपादपूरणावधारणसमुच्चयेषु, तृतीयस्तु विशेषणयोजित एव, इयं चोत्कृष्टतः कायस्थितिरुक्ता, जघन्यतस्तु सर्वेषामंतर्मुहूर्तमिति. तथेहानंतकालं कायस्थितिः सामान्येन वनस्पतिजीवान् निगोदजीवान् वापेक्ष्य विज्ञेया, विशेषापेक्षायां तु प्रत्येकवनस्पतीनां त- था निगोदानां बादराणां सूक्ष्माणां चासंख्यकालैव स्थितिः, यदुक्तं—पत्तेयसरीरपायववणप्फइकाइ याणं भंते केवइयं कालं ठिई पन्नत्ता? गोयमा! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं सत्तरिसागरोवमको- डाकोडीउ. निउएणं भंतेत्ति० ठिइत्ति० कालउ किच्चिरं होइ? गोयमा! जहन्नेणं अंतोमुहुत्तंउ- क्कोसेणं अणंतं कालं अणंताउ उसप्पिणिउसप्पिणीउ, खित्तउ अह्वाइज्जा पुग्गलपरियट्टा. बा यरनिगोए पुच्छा—जहन्नेणं अंतोमुहुत्तं उक्कोसेणं सत्तरिसागरोवमकोडीउ. सुहुमनिगोए पुच्छा— जहन्नेणं अंतोमुहुत्तं उक्कोसेणं असंखेज्जं कालंति. त्रसेषु पुनः कायस्थितिरिहानुक्तापि सूत्रांतरा-

ज्ञप्यते, तत्र सामान्येन वर्षाधिकानि विंशतिः सागरोपमशतानि. विशेषस्तु—वाससहस्स असंखा । विगलाण ठिई होइ णायव्वा ॥ सत्तठभवा उ भवे । पणिंदितिरिमणुयउक्कोसा ॥ १ ॥ इति गाथार्थः ॥ १८ ॥ अथ लेश्याद्वारमधिकृत्याह—

॥ मूलम् ॥—किण्हा नीला काऊ । तेऊ पम्हा तहेव सुक्का य ॥ छल्लेसा खलु एया । जीवाणं हुंति विण्णेया ॥ १९ ॥ व्याख्या—लेशयंति श्लेषयंत्यात्मानमष्टविधेन कर्मणा स्थितिहेतुत्वादिति लेश्याः, तत्र कृष्णवर्णपुद्गलसंनिधानादात्मनोऽशुभतम· परिणाम कृष्णलेश्या. नीलवर्णपुद्गलसंनिधानादशुभतरपरिणामो नीललेश्या. कापोतवर्णपुद्गलसंनिधानादशुभपरिणामः कापोतलेश्या. तैजसवर्णपुद्गलसंनिधानाच्छुभपरिणामस्तेजोलेश्या. पद्मवर्णपुद्गलसंनिधानाच्छुभतरपरिणाम· पद्मलेश्या. शुक्लवर्णपुद्गलसंनिधानाच्छुभतमपरिणामः शुक्ललेश्या. शेषं स्पष्टं, कृष्णादिद्रव्याणि च सकलकर्मप्रकृतिनिष्पंदभूतानि. तदुपाधिजन्मानो भावलेश्या· स्थितिहेतवः, यदाह—ताः कृष्णनीलकापोत—तैजसीपद्मशुक्लनामानः ॥ श्लेष इव वर्णबंधस्य । कर्मबंधस्थितिविधात्र्यः ॥ १ ॥ एतासां च वर्णादिविस्तरस्वरूपमुत्तराध्ययनादिसिद्धांतादवसेयं, इह तु नोच्यते ग्रंथगौरवभयादिति गाथार्थः ॥

॥ १९ ॥ एताश्च दृष्टांततः स्पष्टतयावगम्यंत इति दृष्टांतद्वयसूचनायाह—

॥मूलम्॥—मूलं साहपसाहा । गुब्भफले छिंदपडियसक्कणया ॥ सव्वं माणुसपुरिसे । साउहजुब्भंत धणहरणा ॥ २० ॥ व्याख्या—किल केचन षट् पुरुषाः क्षुत्क्षामकुक्षयः प्रचुरतरफलभरावनम्रमेकं जंबूवृक्षमद्राक्षुः, ततः सर्वेषामपि फलानि जिघत्सूनां कथं पुनरेतानि गृहीतव्यानीति संजातो मनसि मनोरथः, तेषामेकः प्राह मूलं निःस्कंधं छिंतेति सर्वत्र योज्यं, यथा पतितस्य शाखिनः सुखमास्वाद्यंते फलानि, द्वितीयः प्राह शाखाः, स्कंधपल्लवमूलच्छेदेऽपि तास्वेव फलावाप्तेः, तृतीयः प्राह प्रशाखा· शाखाप्रभवाः, शाखाभंगेऽपि प्रशाखास्वेव फलसद्भावात्. तुर्यः प्राह गुच्छान् प्रशाखाप्ररूढान्, प्रशाखाभ्रंशेऽपि गुच्छेष्वेवातुच्छफललाभात्. पंचमः प्राह फलानि गुच्छाग्रजातानि, तदर्थमेव प्रवृत्तेः. षष्ठः पुनः प्राह पतितानि फलानि यानि संति तान्येव भक्षयत, अलं मूलच्छेदादिभिः, इहाद्यः कृष्णलेश्यो यावदंतिमः शुक्ललेश्यः परिणामतारतम्यादिति. अथवा द्वितीयमुदाहरणं—

किल केचन षण्मलिम्लुचाः कंचन ग्राममुल्लुंटयितुं प्रतस्थिरे, ततस्तत्र प्रविशतां तेषामत्रोचदेको यथा—सर्वं तिर्यग्मनुष्यादिकं, द्वितीयस्तु मानुषान् न पुनस्तिरश्चः, तृतीयः पुरुषान् न पुन·

पंचमो युध्यमानान् न पुन सायुधानप्यु-
स्त्रियः, चतुर्थस्तानपि सायुधान् न पुन. प्रहरणरहितान्, पंचमो युध्यमानान् न पुन सायुधानप्यु- ... धनमेव हरन्,
दासीनान्, प्रस्तावात्सर्वत्र हतेति विशेषः. षष्ठस्तु धनहरणे नैव न. प्रयोजनं, अतो धनमेव हरन्,
मा कंचिद्धिंष्टेत्यर्थः, लेश्योपसंहारस्तु प्राग्वदिति गाथार्थः ॥ २० ॥ संप्रति संयमद्वारमाह—

॥ मूलम् ॥—सामाइयं पढमं । छेओवट्ठावणं भवे बीयं ॥ परिहारविसुद्धीयं । सुहुमं तह सं-
परायं च ॥ २१ ॥ तत्तो य अहक्खायं । सव्वम्मि जीवलोगंमि ॥ जं चरिऊण सुविहिया । वच्चंत-
यरामरं ठाणं ॥ २२ ॥ व्याख्या—समुदायार्थः सुगमः, अवयवार्थः पुन. कथ्यते, सामायिकं द्विवि-
धमित्वरं यावत्कथिकं च. तत्रेत्वरं भरतैरवतेषु प्रथमचरमजिनतीर्थयोरुपस्थापनायां छेदोपस्थापनीय-
चारित्रभावेन तद्व्यपदेशाभावात. यावत्कथिकं च मध्यमतीर्थकरतीर्थेषु महाविदेहेषु चोपस्थापना-
भावे तद्व्यपदेशस्य यावज्जीवमपि संभवात्. तथा छेद. सातिचारस्य यतेर्निरतिचारस्य वा शैक्षकस्य
तीर्थांतरसंबंधिनो वा तीर्थांतरं प्रतिपद्यमानस्य पूर्वपर्यायव्यवच्छेदरूप., तद्युक्तोपस्थापना महाव्रतारो-
पणरूपा यस्मिंस्तच्छेदोपस्थापनं. परिहारविशुद्धिकं द्विविधं, निर्विशमानकं निविष्टकायिकं च, आद्य-
मासेवमानानां, द्वितीयमासेवितचारित्राणामिह च नवको गण., तत्र चत्वारः परिहारकाश्चत्वारस्त-

वैयावृत्त्यकरा अनुपरिहारकाः, एकस्तु कल्पस्थितो वाचनाचार्यः, तेषामिदं तपः, तथाहि—परिहारियाण उ तवो । जहन्नमज्झो तहेव उक्कोसो ॥ सीउण्हवासकाले । भणिउ धीरेहिं पत्तेयं ॥ १ ॥ तत्थ जहन्नो गिम्हे । चउत्थछट्ठं तु होइ मज्झिमओ ॥ अट्ठममिहमुक्कोसो । इत्तो सिसिरे पवक्खामि ॥ २ ॥ सिसिरे उ जहन्नाई । छट्ठाई दसम चरिमगो होइ ॥ वासासु अट्ठमाई । बारसज्जंतउ नेउ ॥३॥ पारणगे आयामं । पंचसु गहदोसुभिग्गहो भिक्खो ॥ कप्पट्ठिया उ पइदिण । करेंति एमेव आयामं ॥ ४ ॥ एवं छम्मासतवं । चरिउं परिहारगा अणुचरंति ॥ अणुचरगे परिहारिग । पइट्ठिए जाव छम्मासा ॥ ५ ॥ कप्पट्ठिउवि एवं । छम्मासतवं करेइ सेसाउ ॥ अणुपरिहारिगभावं । वयंति कप्पट्ठियत्तं च ॥ ६ ॥

एसो अट्ठारसमास—पमाणो य वन्निउ कप्पो ॥ संखेवो य विसेसो । सुत्ताउ तस्स नायव्वो ॥ ७ ॥ कप्पसमत्तीए तयं । जिणकप्पं वा उविंति गच्छं वा ॥ पडिवज्जमाणगा पुण । जिणस्सगासे पवज्जंति ॥ ८ ॥ तित्थयरसमीवा—सेवगस्स पासेव न उ अन्नस्स ॥ एएसिं जं चरणं । परिहारविसुद्धिगं तं तु ॥ ९ ॥ उपशमश्रेणिक्षपकश्रेण्योर्लोभाणुवेदनसमये सूक्ष्मः संपरायो लोभांश

कषायो यस्मिंस्तच्छद्मसंपरायं. यथाख्यातमर्हत्कथितस्वरूपानतिक्रमवत्तच्च छद्मस्थस्योपशांतक्षीण-
मोहाख्यगुणस्थानद्वयवर्तिनः सयोग्ययोगिगुणस्थानद्वयस्थायिनः केवलिनश्च भवतीति गाथार्थः ॥
॥ २२ ॥ अथ योनिद्वारं विवृणोति—

॥ मूलम् ॥—पुढविदगअगणिमारुय । इक्केक्के सत्तजोणिलक्खाउ ॥ वणपत्तेय अणंता ।
दस चउद्दस जोणिलक्खाउ ॥ २३ ॥ विगलिंदिएसु दोदो । चउरो चउरो य नारयसुरेसु ॥ ति-
रिएसु हुंति चउरो । चउद्दसलक्खा उ मणुएसु ॥ २४ ॥ व्याख्या—स्पष्टं, नवरं सर्वमीलनाच्चतुर-
शीतिलक्षाणि. अत्र च समानवर्णगंधरसस्पर्शपरिणामा बहवोऽपि व्यक्तयः, एकैव योनिः, अन्यथा
प्रतिव्यक्तियोनिभेदे योनिबहुत्वं प्राप्नोतीति. इह चैताः सर्वा अपि सामान्येन सचित्त तन्मिश्र सं-
वृत तन्मिश्र विवृत तन्मिश्र शीतोष्णतन्मिश्रभेदान्नवधा भवंतीति गाथार्थः ॥ २४ ॥ अधुना यो-
गानाह—

॥ मूलम् ॥—सच्चं मोसं मीसं । असच्चमोसं मणो वई अट्ठ ॥ काउ उराल विकिय । आ-
हारग मीस कम्मइगो ॥ २५ ॥ व्याख्या—इह प्रथमं तावत्सुखप्रतिपत्तये मनोवाक्काययोगस्वरूपमु-

च्यते, तत्रात्मना सर्वप्रदेशैर्गृहीता मनोयोग्याः पुद्गलाः शुभादिमननार्थं करणभावमालंबंते, तत्संबंधादात्मनः पराक्रमविशेषो मनोयोगः, तथात्मना वाग्योग्याः पुद्गला गृहीता विसृज्यमाना वाक्त्वेन करणतामापद्यंते, तेन वाक्करणेन संबंधादात्मनो भाषणशक्तिर्वाग्योगः. कायः शरीरमात्मनो निवासः, तद्योगाज्जीवस्य वीर्यपरिणामः काययोगः, ते चामी त्रयोऽपि मनोवाक्कायसंबंधादग्निसंबंधादिष्टकादे रक्ततेवात्मनो वीर्यपरिणतिविशेषा मनोवाक्काययोगा इत्युच्यते. यदाह–जोगो विरियं थामो । उच्छाहपरक्कमो तहा चिठ्ठा ॥ सत्ती सामत्थं चिय । जोगस्स हवंति पज्जाया ॥ १ ॥ एते स्थविरस्य दुर्बलस्य वालंबनयष्ट्यादिवज्जीवस्योपग्राहका इति. संप्रति गाथाव्याख्यानमनुश्रियते–सद्भ्योऽर्थात्पदार्थेभ्यो हितं यथावत्संकल्पनेनेति सत्यं, तद्विपरीतं मृषा, मिश्रमुभयस्वभावं, असत्यामृषमुभयस्वभावविकलमनोदलिकरूपं, मन इति मनोयोगः. वेत्ति चकाराभावेऽपि समुच्चयावगमाद्वाक्सत्यादिरूपेत्यर्थः, तत्र सत्या जीवं जीवमिति प्ररूपयतः, असत्या जीवमजीवमिति. सत्यामृषा क्वचिद्विवक्षितसमये मनुष्यशतमुत्पन्नमुपरतं चेति. असत्यामृषा तु विधेहि स्वाध्यायं, नैतत्सदृशमन्यत्तपोऽस्तीत्येवमादि. एवमष्टौ योगाः, तथा काउत्ति काययोगः, उरालत्ति उदारं शेषशरीरेभ्यः प्रधानं, प्राधान्यं चेह ती-

तदन्यस्यानुत्तरसुरशरीरस्याप्यनंतगुणहीनत्वात्, यदिवा साधिकयोजन-
र्थंकृत्गणधरशरीरापेक्षया, उत्तरवैक्रियं तु ल-
सहस्रप्रमाणत्वेन शेषशरीरेभ्यो बृहत्प्रमाणमुदारं, बृहत्त्वं च भवधारणीयापेक्षं,
क्षयोजनमानमपि स्यात्. तद्योगोप्युदारः. वि-
वैक्रियादिवर्गणांत. परिस्थूरवर्गणानिष्पन्नत्वेन वा उदारमौदारिकशरीरं. आह्रियंते गृह्यं-
विधा विशिष्य वा क्रिया विक्रिया, तस्यां भवं वैक्रियं, तस्यायं योग इति वैक्रियः. तथा मिश्रोऽयमेवौ
ते तीर्थकरादेः समीपत. सूक्ष्मा. पदार्था अनेनेत्याहारकं, तस्यायमित्याहारकः, वैक्रिया-
दारिकादिरपर्याप्तकस्य जंतोस्तत्रोत्पत्तावौदारिक काययोगः. कार्मणेन औदारिकशरीरिणश्च का
हारककरणकाले तान्यामेव मिश्रो भवतीत्यौदारिकमिश्रः, वैक्रियमिश्रो देवादीनामुत्पत्तिसमये
र्मणेन कृतवैक्रियस्य पुनरौदारिकमिश्रत्वाद्यामौदारिकेण, आहारकमिश्रस्तु साधिताहारककायप्रयो-
जनस्य पुनरौदारिकप्रवेशे औदारिकेणेति प्रज्ञापनाव्याख्यानाभिप्रायः. कम्मइगुत्ति कार्मणे विग्रहे
केवलिसमुद्घाते चेति. तैजसस्य तु सदैव कार्मणसहचरत्वान्न तद्व्यापार. पृथगिति न तदभिधान
मिति काययोगः सप्तधा. सर्वमीलने योगाः पंचदशेति गाथार्थः ॥ २५ ॥ अथ जीवलक्षणानुप-

योगानाह—

॥ मूलम् ॥—णाणं पंचविगप्पं । अण्णाणतिगं च सव्वसागारं ॥ चउदंसणमणगारं । उवओगा बारस होवंति ॥ २६ ॥ व्याख्या—ज्ञायतेऽवबुध्यतेऽनेन वस्तुतत्त्वमिति ज्ञानं, तच्च सम्यग्ज्ञानमेव पंच विकल्पा भेदा यस्य तत्तथा, भेदाश्चाभिनिबोधिकश्रुतमनःपर्यवकेवलाख्याः, तत्राभिमुखो योग्यदेशावस्थितवस्त्वपेक्षया नियतः स्वस्वविषयपरिच्छेदकतया बोधोऽभिनिबोधः, स एवाभिनिबोधिकमिंद्रियानिंद्रियप्रभवमर्थावग्रहादिभेदं. श्रूयते तदिति श्रुतं शब्दमात्रं तच्च द्रव्यश्रुतमेव. यत्पुनः शब्दमाकर्णयतः स्वयं वा वदतः पुस्तकादिन्यस्तानि वाक्षराण्युपलभमानस्य शेषेंद्रियगृहीतं वार्थं विकल्पयतोऽक्षरानुरूपं विज्ञानमुपजायते तदिह भावश्रुतमक्षरानक्षरादि. अवधिर्मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरित्येवंरूपा. तदुपलक्षितं ज्ञानमप्यवधिर्देवनारकाणां तत्प्रत्ययः, शेषाणां सविपक्षानुगामिकावस्थितहीयमानभेदात् षोढा.

मन इति मनोद्रव्यपर्यायास्तान् परिसमंतादवगच्छतीति मनःपर्यवं ऋजुविपुलभेदं मनुष्यक्षेत्रवर्तिसंज्ञिमनःपर्यायाणां ग्राहकं, न तु तच्चिंतितबाह्यवस्तूनां, तेषामनुमानगम्यत्वात्, तथा च—जा-

एइ नेष्ट अणुमाणाउत्ति ' केवलमसाधारणमनंतं वा सकलद्रव्यगुणपर्यायावभासकमिति. तथा मि
थ्यात्वोदयवतामसदवसायात्मकानि ज्ञानान्यप्यज्ञानान्येव, तेषां त्रिकमत्यज्ञानश्रुताज्ञानविभंगरूपं स-
र्वमिति सुप्लोपः प्राकृतत्वात्, सर्वं ज्ञानमज्ञानं च, सह आकारेण ग्राह्यार्थसारूप्यलक्षणेन वर्तत
इति साकारं विशेषग्राहकमित्यर्थः. तथा चतुर्णां दर्शनानां समाहारश्चतुर्दर्शनं चक्षुर्दर्शनादि, तत्र
चक्षुषा सामान्याकारस्य ग्रहणं चक्षुर्दर्शनं, शेषेंद्रियैर्मनसा वाचक्षुर्दर्शनं, अवधिना त्ववधिदर्शनं, के-
वलेन पुनः केवलदर्शनं. न विद्यते आकारो ग्राह्यार्थसारूप्यं यस्य. सामान्याकारग्रहणादनाकारमि
ह च मनःपर्यवज्ञानं विशेषाकारग्राहकमेवेति, न तत्कृतो दर्शनभेदः, यदाह—विशेषानेव गृह्णा-
नं । क्षयोपशमपाटवात ॥ उत्पद्यते मनोज्ञान—मतस्तत्र न दर्शनं ॥ १ ॥ यत्पुनर्मनःपर्यवज्ञानी
क्वचित्सामान्याकारं गृह्णाति तदवधिदर्शनेनैव वेदितव्यं. तथा विभंगिनो दर्शनमवधिज्ञानिना समा-
नमेवेति न ज्ञानवत्तत्रापि भेदः, तथाच प्रज्ञप्तिः—ओहिदंसणअणगारोवउत्ताणं भंते किं णाणी अ-
न्नाणी? गोयमा! नाणीवि अन्नाणीवि, जे नाणी ते अत्थेगइया तिन्नाणी अत्थेगइया चउनाणी. जे
अन्नाणी ते नियमा तिन्नाणीत्ति. एवमुपयुज्यंते जीवस्य पदार्थग्रहणंप्रति साधनतां व्रजंतीत्युपयोगा

द्वादश भवंतीति गाथार्थः ॥ २६ ॥ संप्रति जीवस्यैवोत्तरोत्तरविशुद्धिरूपाणि गुणस्थानान्याह—

॥ मूलम् ॥—मिछदिठी सासा—यणे य तह सम्ममिछदिट्ठी य ॥ अविरयसम्मदिठी । विरयाविरई पमत्ते य ॥ २७ ॥ तत्तो य अप्पमत्ते । नियट्टि अन्नियट्टि बायरे सुहुमे ॥ उवसंतखीणमोहे । होइ सजोगी अजोगी य ॥ २८ ॥ व्याख्या—तिष्ठंति यथासंभवमविशुद्धविशुद्धरूपतया गुणा एष्विति स्थानानि अवस्थाविशेषा गुणनां ज्ञानादीनां स्थानानि गुणस्थानानि चतुर्दश भवंतीत्यनुक्तमपि प्रस्तावाद् ज्ञेयं, तत्र मिथ्या वक्ष्यमाणमिथ्यात्वोदयाद्विपर्यस्ता दृष्टिर्यस्य सः, तथा गुणस्थानत्वं चास्य भद्रकत्वाद्यपेक्षया १. आ ईषत्स्वादनं तत्वश्रद्धानरसानुभवः, सह तेन वर्तत इति सास्वादनोऽनंतानुबंध्युदयतो वक्ष्यमाणौपशमिकसम्यक्त्वात्प्रच्यवमानोऽद्याप्यनुदितमिथ्यात्वश्चेत्यर्थः. एकारः सर्वत्र प्राकृतत्वात २. तथा सम्यग्मिथ्या च सम्यग्मिथ्या, सम्यग्मिथ्या दृष्टिर्यस्य सः, तथा वक्ष्यमाणार्धविशुद्धपुंजवेदनान्मिश्रदर्शन इत्यर्थः, सर्वाण्यप्यव्ययानि समुच्चयार्थानि ३. न विरतोऽप्रत्याख्यानकषायोदयात् सावद्ययोगेभ्य इत्यविरतः, स चासौ वक्ष्यमाणसम्यक्त्वयोगात्सम्यग्दृष्टिश्च स तथा ४. विरतश्चासौ देशतः, अविरतश्च सर्वतः प्रत्याख्यानकषायोदयाद्विरताविरत ५.

प्रमत्त इति भीमादिन्यायात्प्रमत्तसंयत, प्रमाद्यतीति प्रमत्तोऽज्ञानसंशयविपर्ययरागद्वेषस्मृतिभ्रंशयोग-
दुःप्रणिधानधर्मानादराणां मध्यादन्यतमप्रमादवान्, स चासौ संयतश्च सर्वविरतः ६. ॥ २७ ॥ तत-
श्चाप्रमत्तसंयतो वर्णितप्रमादरहित ७. नियट्टित्ति निवृत्तिबादरस्तत्र निवृत्तिमंतो व्यावृत्ता अध्यवसा
यतः परस्परविलक्षणा इत्यर्थः, बादरा बादरकषाया जंतवो यत्र स तथा. इयमिह भावना—

किलैतस्मिन्नाद्यसमय एवासंख्यलोकप्रदेशतुल्यानि जघन्यादीन्युत्कर्षांतान्यध्यवसायस्थानानि
उत्तरोत्तरेषु च समयेष्वधिकानि, तेषु च जघन्यादुत्कर्षं, प्राक्तनोत्कर्षाच्चोत्तरजघन्यमनंतगुणविशु-
द्धं, ततश्च युगपदेतद्गुणस्थानं प्रतिपन्नानां जंतूनां परस्परमध्यवसायतो वैलक्षण्यं चेत्यर्थः. इह च
कर्मणां स्थितिघातरसघातादीनपूर्वान् कुरुते, इत्यपूर्वकरणोऽप्ययमुच्यते. तत्र पूर्वगुणस्थानेषु याव-
त्स्थितिखण्डकं रसखंडकं च हतवांस्ततोऽत्र बृहत्तरं हंति, तथा विशुद्धिवशादपवर्तनाकरणेनोपरितनस्थि-
तेरवतार्योदयक्षणानंतरमंतर्मुहूर्तकालक्षपणीयानां प्रतिसमयमसंख्यगुणवृद्ध्या दलिकानां विरचनं गु-
णश्रेणिस्तां च प्राक्कालतो गुर्वीमपवर्तितस्वल्पदलिकां विरचितवान्, इह तु कालतो लघ्वीमपवर्तित-
भूरिदलिकां च रचयति. तथा शुभप्रकृतिष्वशुभप्रकृतिदलिकानां विशुद्धिवशादनुसमयमसंख्यगुण-

वृद्ध्यानयनं गुणसंक्रमः, तमप्यत्रापूर्वं करोति स्थितिबंधं च पूर्वं दीर्घं कृतवान् इह तु ह्रस्वमिति. अयं चोपशमक्षययोग्यकर्मदलिककरणादुपशमकक्षपकश्च भण्यते ८. अनिवृत्तयो व्यावृत्तयो बादरा यस्मिन्नसावनिवृत्तिबादरः, प्रतिसमयमनंतगुणविशुद्धैकैकाध्यवसायस्थानत्वादस्य युगपदेतत्प्रतिपन्नानां परस्य वशाय वैलक्षण्यमित्यर्थः, अयमप्युपशमकः क्षपकश्च ९. सुहमित्ति सूक्ष्मसंपरायस्तत्र समंतात् परायंति पर्यटंति जीवाः संसारमेभिरिति संपरायाः कषायाः, इह तु शेषाणामनुदयाल्लोभ एव ग्राह्यः, सूक्ष्मः किट्टीभूतसंपरायो यस्य स तथा, अयमप्युपशमकः क्षपकश्च १०. मोहशब्दस्योभयत्र संबंधादुपशांतो विद्यमान एव करणविशेषाद्भस्मछन्नाग्निवदुदयायोगीभूतो मोहो यस्य स तथा उपशमश्रेणेरुत्तीर्ण इत्यर्थः ११. क्षीणो अभावमापन्नो मोहो यस्य स तथा क्षपकश्रेणेः परतः केवलोत्पत्तेरर्वाग्वर्ती भवति १२. सयोगित्ति सयोगिकेवली, तत्र सह योगैर्मनोवाक्कायव्यापारैर्वर्तत इति सयोगी, सर्वधनाधनादेराकृतिगणत्वाद् बहुव्रीहेर्मत्वर्थीं यः, सयोगी चासौ केवली च, न च केवलिनो मनोयोगो नास्ति, मनःपर्यवज्ञान्यादिभिर्मनसा पृष्टस्य मनसैव देशकत्वात् १३. योगनिरोधादयोगी, स चासौ केवली च १४. गुणरूपतया चामीषामभिधानं गुणगुणिनोः कथंचिदनन्यत्वादिति. का-

लमानं चामीषां—

मिछत्तभवाणं । अणाइयमणंतयं मुणेयव्वं ॥ भव्वाणं तु अणाइ । सपज्जवसियं तु सम्मत्तं ॥
॥ १ ॥ छावलीयं सासाणं । समहिय तित्तीससागरचउत्थं ॥ देसूणपुव्वकोडी । पंचमगं तेरसंचपुढो
॥ २ ॥ लहुपंचक्खरचरिमं । तइयं छठाइ बारसं जाव ॥ इय अठगुणठाणा । अंतमुहुत्ता य पत्तेयं
॥ ३ ॥ अयमन्यश्च विशेषः—मिछे सासाणे वा । अविरयसम्मम्मि अहव गहियम्मि ॥ जंति जि-
या परलोगे । सेसिक्कारसगुणे मोत्तुं ॥ १ ॥ इति गाथार्थः ॥ २७ ॥ एवमियता ग्रंथेन जीवस्था-
नानि तद्गतयोगोपयोगगुणस्थानानि च प्रतिपादितानि तानि च गत्यादिद्वारेषु विचार्यंत इति
तान्याह—

॥ मूलम् ॥—गइ इंदिए काए । जोए वेए कसायणाणे य ॥ संजमदंसणलेसा । भवसम्मे
सन्नि आहारे ॥ २८ ॥ व्याख्या—इह प्राकृतत्वात् क्वचिद्विभक्तिलोपात् क्वचिच्चैकवचनावस्तत्र गता-
विति गतिमंगीकृत्य ४, इंदिएयत्ति इंद्रियाण्यंगीकृत्य ५, एवं काये पृथिवीकायादौ ६, योगे मन आ-
दौ ३, वेदे स्त्र्यादौ, ३, कषाये क्रोधादौ ४, ज्ञाने मत्यादावुपलक्षणत्वान्मत्यज्ञानादौ च ८, एवम

न्यत्रापि यत्र सविपक्षं पदं तत्रायमेव हेतुः, संयमे देशसंयमसामायिकादावसंयमे च ७, दर्शने चक्षुर्दर्शनादौ ४, लेश्यासु कृष्णाद्यासु ६, भीमसेनवत्समुदायशब्दानामवयवेऽपि वृत्तिदर्शनाद्भवसिद्धिकेऽभव्ये च २, सम्मित्ति सम्यक्त्वे क्षायोपशमिकक्षायिकौपशमिकमिश्रसास्वादनरूपे मिथ्यात्वे च ६, संज्ञिन्यसंज्ञिनि च २, प्रथमः चकारः समुच्चयार्थः, द्वितीयस्त्वेतेषामेव पदानामवांतरभेदसूचकः; अत एव मूलतश्चतुर्दशसूत्तरभेदापेक्षया तु द्विषष्टिप्रमाणेष्विति गाथार्थः ॥ २७ ॥ किमित्याह—

॥ मूलम् ॥—एएसु मग्गणठाणेसु जीवगुणजोगुवयोगामगिज्जंति ॥ २७ ॥ इति वाक्यं. एतच्चैवं विचित्वात्तंत्ररचनायाः, अत एव नानाछंदोविशेषैर्विरचनमिति. मार्ग्यंते विचार्यंते जीवादिपदान्यास्विति मार्गणाः, ताश्च तानि-स्थानानि च विचारास्पदानि तेषु, शेषं स्पष्टं, तथा यद्यपि पूर्वमेकत्वद्विविधत्वादिभिर्बहुभिः प्रकारैर्जीवस्थानानि प्रतिपादितानि, तथाप्यतिसंक्षेपाश्रयणाद् दुरवगमं, विस्तराश्रयणे च संक्षेपरुचित्वात्सत्वानामनादेयं स्यादिति मध्यमस्थानवर्ती चतुर्दशक एव मार्गणासु मार्ग्यते, अस्यैव सूत्रे प्रायो विचारणात्. तत्र गतिमंगीकृत्य तावत्सुरनारकयोः पर्याप्तापर्याप्तसंज्ञिनौ, मनुष्येषु तृतीयोऽसंज्ञ्यपर्याप्तः, तिर्यक्षु चतुर्दशापि जीवस्थानानि १. इंद्रियाण्यधिकृत्यकेंद्रिये पर्याप्ताप-

र्याप्तसूक्ष्मबादराः, द्वित्रिचतुरिंद्रियेषु तावेव पर्याप्तापर्याप्तौ द्वौ द्वौ, पंचेंद्रियेषु पर्याप्तापर्याप्तसंज्ञिनः ४, कायद्वारे स्थावरेषु पंचस्वप्येकेंद्रियेष्विव ४, त्रसेषु शेषा दश ३, योगद्वारे मनोयोगे पर्याप्तसंज्ञे च वाग्योगे पर्याप्तद्वित्रिचतुरिंद्रियासंज्ञिसंज्ञिनः ५, काययोगे सर्वेऽपि ४ वेदद्वारे पुंस्त्रीवेदयोः कर्मग्रंथाभिप्रायेण पंचेंद्रियेष्विव ४, सूत्राभिप्रायेण तु पर्याप्तापर्याप्तसंज्ञिनावेव, असंज्ञी तु पर्याप्तोऽपर्याप्तो वा नपुंसकवेदो वा, तथा च प्रज्ञप्तिः—

असंज्ञिपुच्छा—गोयमा नपुंसकवेयगा, नपुंसकवेदे तु सर्वेऽपि ५, कषायद्वारे चतुर्ष्वपि सर्वेऽपि ७, संयमद्वारे देशसंयमे सामायिकादिषु च ५ पर्याप्तसंज्ञी, असंयमे तु सर्वेऽपि ७, दर्शनद्वारे चक्षुर्दर्शने पर्याप्तचतुरिंद्रियासंज्ञिसंज्ञिनः ३, अचक्षुर्दर्शने सर्वेऽपि, अवधिदर्शने पर्याप्तसंज्ञिनौ, केवलदर्शने संज्ञिपर्याप्तकः, ९ लेश्याद्वारे आद्यासु तिसृषु सर्वेऽपि, तैजस्यां बादरापर्याप्तकः संज्ञिद्विकं च ३, पद्मशुक्लयोस्तु संज्ञिद्विकं, १० भव्यद्वारे भव्येष्वभव्येषु च सर्वेऽपि, ११ सम्यक्त्वद्वारे क्षायोपशमिकक्षायिकयोः संज्ञिद्वयं, सास्वादनेऽपर्याप्तबादरद्वित्रिचतुरिंद्रियासंज्ञिसंज्ञिनः संज्ञिपर्याप्तकश्च ७, मिश्रौपशमिकयोः पर्याप्तसंज्ञी, यत्पुनरौपशमिके संज्ञिनमपर्याप्तमपि केचिदिच्छंति तन्न युक्तिक्षमं, य-

तोऽपर्याप्तावस्थायां तथाविधशुद्ध्यभावात्तस्यानुत्पत्तेः—अणुबंधो १ दय २ माउग—बंध ४ कालो ॥ च सासणो कुणइ ॥ उवसमसम्मदिठी । चउएहमिक्कंपि नो कुणइ ॥ १ ॥

इतिवचनात् पारभविकस्याप्यघटनादिति, मिथ्यात्वे तु सर्वेऽपि, १२ संज्ञिद्वारे संज्ञिनि संज्ञिद्विक- मसंज्ञिनि संज्ञिद्विकरहिता द्वादश, १३ आहारकद्वारे आहारकेषु सर्वे. अनाहारके तु सप्तापर्याप्ताः संज्ञिपर्याप्तकाश्चेति १४ मार्गितानि गत्यादिषु जीवस्थानानि, संप्रति गुणस्थानानि मृग्यंते—तत्र ग- तिद्वारे देवनारकयोराद्यानि चत्वारि, तिर्यक्षु पंच, मनुष्येषु चतुर्दशापि १, इंडियद्वारे एकेंड्रियवि कलेंद्रियेष्वाद्ये द्वे, पंचेंद्रियेषु चतुर्दश २, कायद्वारे पृथिव्युदकवनस्पतिष्वाद्ये द्वे, तेजोवायुषु प्रथम- मेव, त्रसकाये चतुर्दश ३, योगद्वारे सामान्येन त्रयोदश, चरमगुणस्थानं त्वयोगिन एवमुत्तरत्रापि भावनीयं ४.

वेदद्वारे नव ५, कषायद्वारे कषायत्रये नव, लोभे तु दश ६, ज्ञानद्वारे मतिश्रुतावधिष्वविर- तादीनि नव, मनःपर्यवे तु प्रमत्तादीनि सप्त, केवले चरमे द्वे, अज्ञानत्रिके त्वाद्ये द्वे, मिश्रदृष्टेरप्य ज्ञानवादिनां तु मते त्रीणि, सास्वादनसम्यग्दृष्टेस्त्वनंतानुबंधिकषायैरतिदूषितत्वादज्ञानमेव ७, संय-

मद्वारे सामायिकच्छेदोपस्थापनीययोः प्रमत्तादीनि चत्वारि, परिहारविशुद्धिके प्रमत्ताप्रमत्ते, देशविरतसूक्ष्मसंपराययोः स्वं स्वं, यथाख्याते चरमाण्यसंयमे त्वाद्यानि चत्वारि ८, दर्शनद्वारे चक्षुरचक्षुर्दर्शनयोराद्यानि द्वादश, अवधिदर्शने त्वविरताद्यानि नव, केवलदर्शने चरमद्विकं ९, लेश्याद्वारे कृष्णनीलकापोतलेश्यास्वाद्यानि षट्. तैजसीपद्मयोः सप्त, शुक्लायां त्रयोदश १०. भव्यद्वारे भव्येषु सर्वाणि, अभव्येषु प्रथममेव ११, सम्यक्त्वद्वारे क्षायोपशमिके चत्वार्यविरतादीनि. क्षायिके त्वेकादश. औपशमिके पुनरष्टौ, सास्वादनमिश्रमिथ्यात्वेषु स्वं स्वं १२ संज्ञिद्वारे संज्ञिषु चतुर्दश, संज्ञित्वं च सयोगिनो द्रव्यमनः प्रतीत्यायोगिनस्तु पूर्वावस्थामसंज्ञिषु मिथ्यात्वसास्वादनौ १३, आहारकद्वारे आहारकेष्वाद्यानि त्रयोदश, अनाहारकेषु मिथ्यात्वसास्वादनाविरतसयोग्ययोग्याख्यानि पंचेति १४. मार्गितानि गुणस्थानकानि, संप्रति योगानामवसरः, तत्र तावद्येषु पदेषु पंचदशापि येषु च त्रयोदशयोगाः संभवंति तानि लाघवार्थं कथ्यंते, तथाहि—मनुजगति १ पंचेंद्रिय २ त्रसकाय ३ काययोग ४ पुं ५ नपुंसकवेद ६ कषाय १० मति ११ श्रुत १२ वध्य १३ चक्षु १४ स्वधिदर्शन १५ लेश्याषट्क २१ भव्य २२ क्षायोपशमिक २३ क्षायिक २४ संज्ञि २५ लक्षणपंचविंशतिस्थानेषु

पंचदशापि. तिर्यग्गति १ स्त्रीवेदा २ ज्ञानत्रिका ५ संयमा ६ भव्यो ७ पशमिकसम्यक्त्वसास्वादन ९ मि-
थ्यात्वे १० ष्वाहारकतन्मिश्रवर्जिता १३ मनो १४ वाग्योग १२ मन.पर्यव १३ सामायिक १४ छेदोपस्था-
पनीय १५ चक्षुर्दर्शनेषु १६ त्वौदारिकमिश्रकार्मणवर्जितास्त्रयोदशेति. संप्रत्यवशिष्टेषु कथ्यते. तत्र गति
द्वारे सुरनारकगत्योरौदारिकद्विकआहारकद्विकवर्जिता एकादश एकादश. इंद्रियद्वारे एकेंद्रियेष्वौदारि-
कवैक्रियद्विककार्मणाः, विकलेष्वौदारिकद्विककार्मणासत्यामृषाभाषाः ४, २. कायद्वारे वायुकाये औदा
रिकवैक्रियद्विककार्मणा ५, शेषस्थावरकाये ४ त एव वैक्रियद्विकवर्जाः ३, ३, योग ४ वेद ५ कषाय ६
द्वाराण्युक्तार्थानि. ज्ञानद्वारे केवलज्ञाने सत्या असत्यामृषावाग् २ मनः ३ कार्मणौदारिकद्विकानि ७, ७.
संयमद्वारे परिहारविशुद्धिकसूक्ष्मसंपराययोर्वाक्चतुष्टयमनश्चतुष्टयौदारिकाः ९, यथाख्याते त एव का-
र्मणौदारिकमिश्रसहिताः देशसंयमे तु पूर्वे नव वैक्रियद्विकान्विताः ११. दर्शनद्वारे केवलदर्शने के-
वलज्ञानोक्ताः सप्त ९, लेश्या १० भव्यद्वारे ११ तूक्तार्थे. सम्यक्त्वद्वारे मिश्रदृष्टौ वाक्चतुष्टयमनश्च-
तुष्टयौदारिकवैक्रियाः १०. १२.

संज्ञिद्वारे असंज्ञिन्यौदारिकद्विकवैक्रियद्विककार्मणासत्यामृषाभाषाः ६, १३. आहारकद्वारे

आहारकेषु कार्मणवर्जाश्चतुर्दश. अनाहारकेषु कार्मण एवेति १४. गत्यादिषु योगमार्गणा कृता. अथोपयोगा गवेष्यंते—तत्र गतिद्वारे सुरनारकतिर्यग्गतिषु मनःपर्यवकेवलद्विकरहिता नव, इह यत्र क्वचिद् ज्ञानदर्शने विवक्षिष्येते तत्र द्विकमित्यभिधास्यते मनुजगतौ द्वादशापि १. इंद्रियद्वारे एकद्वित्रींद्रियेष्वचक्षुर्दर्शनं मतिश्रुताज्ञाने च ३, चतुरिंद्रियेषु चक्षुर्दर्शनं चतुर्थं पंचेंद्रियेषु सर्वेऽपि २. कायद्वारे स्थावरकायेष्वेकेंद्रियेष्विव त्रसकाये सर्वेऽपि ३. योगद्वारे सामान्येन सर्वेऽपि ४. एवं वेदद्वारेऽपि. कषायद्वारे चतुर्ष्वपि केवलद्विकहीना दश ६ ज्ञानद्वारे मतिश्रुतावधिमनःपर्यवेष्वाद्यानि चत्वारि ज्ञानानि त्रीणि च दर्शनानि, केवले केवलद्विकमज्ञानत्रिके त्वज्ञानत्रिकमाद्यदर्शनद्वयं च ७.

ननु पूर्वं विभंगिनोऽप्यवधिदर्शनं प्रतिष्ठितं, तदिहाज्ञानत्रिके प्रथमदर्शनद्वयं प्रतिपादयतः कथं न विरुध्यते? सत्यं, तत्सूत्राशयेन. एतत्पुनः कर्मग्रंथाभिप्रायेणेति, अत्र विभंगिन सामान्याकारग्रहणं अचक्षुर्दर्शनेनेति. संयमद्वारे सामायिकादिषु चतुर्ष्वाद्यचतुर्ज्ञानदर्शनत्रिकाणि ७, यथाख्याते तान्येव केवलद्विकयुतानि दश. संयमे प्रथमज्ञानत्रयदर्शनत्रये, असंयमे मनःपर्यवसकेवलद्विकवर्जने वा ८. दर्शनद्वारे चक्षुरचक्षुर्दर्शनयोः केवलद्विकरहिता दश, अवधिदर्शने प्रथमचतुर्ज्ञानत्रि

काणि, केवलदर्शने केवलद्विकं ९.

लेश्याद्वारे पंचसु केवलद्विकरहिता दश, शुक्लायां तु सर्वेऽपि १०. भव्यद्वारे भव्येषु सर्वेऽपि, अभव्येष्वज्ञानत्रिकमाद्यदर्शनद्वयं च ११. सम्यक्त्वद्वारे क्षायोपशमिकौपशमिकयोराद्यचतुर्ज्ञानदर्शनत्रिकाणि, क्षायिके तान्येव सकेवलद्विकानि ९, सास्वादनमिथ्यात्वयोरज्ञानत्रयदर्शनद्वयलक्षणाः पंच, मिश्रे ज्ञानत्रयदर्शनत्रयरूपाः षट् केवलमज्ञानमिश्राः १२. संज्ञिद्वारे संज्ञिनि सर्वे, असंज्ञिन्याद्यमज्ञानद्वयं दर्शनद्वयं च १३. आहारकद्वारे आहारकेषु सर्वे, अनाहारकेषु मनःपर्यवचक्षुर्दर्शनरहिता दशेति १४. इह च योगद्वारे वाग्योगः कायं विना, मनोयोगश्च वाक्कायव्यतिरेकेण न संभवतीति तयोरेव जीवादिमार्गणा, कायस्तु वाङ्मनोभ्यां, वाक् तु मनसा विनापि संभवतीति निश्चयनयमतेन तयोस्तद्विनाकृतयोर्जीवादयो मार्ग्यंते, तत्र काययोगे आद्यानि चत्वारि जीवस्थानानि, द्वे गुणस्थाने अज्ञानेऽचक्षुर्दर्शनं चेति त्रय उपयोगाः, औदारिकद्विकवैक्रियद्विककार्मणाः पंच योगाः, मनोरहितवाग्योगे पर्याप्तापर्याप्तद्वित्रिचतुरिंद्रियासंज्ञिनः ८ जीवाः, आद्यौ द्वौ गुणौ औदारिकद्विककार्मणाः सत्यामृषाः ४ स्वरूपा योगाः, आद्या अज्ञानद्वयदर्शनद्वयरूपास्तूपयोगाः, मनो-

योगे पर्याप्तापर्याप्तसंज्ञिनौ जीवौ चरमवर्जास्त्रयोदश गुणाः, कार्मणौदारिकमिश्रवर्जास्त्रयोदश योगा द्वादशोपयोगा इति, निश्चयमतेन चापर्याप्तस्यापि वाङ्मनोयोगौ लभ्येते इति तयोस्तदभिधानमनवद्यमिति. अत्र यंत्रकस्थापना. यथास्थानं तु योगेषु या मार्गणा सा व्यवहाराभिप्रायेणेति कृतं प्रसंगेनेति जीवतत्वं. सप्रपंचं जीवतत्वमभिहितं, संप्रत्यजीवतत्वस्यावसरः, तत्र जीवतत्वे जीवचतुर्दशक उक्तः. इह त्वजीवचतुर्दशकमाह—

॥ मूलम् ॥—धम्माधम्मागासा । तियतियभेया तहेव अद्धा य ॥ खंधा देसपएसा । परमाणु अजीव चउदसहा ॥ २७ ॥ व्याख्या—पदेऽपि पदसमुदायवगमाद्धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायाः, तत्र धारयति गतिपरिणतान् जीवपुद्गलांस्तत्स्वभावतयामिति धर्मः, अस्तयश्चेह प्रदेशास्तेषां चीयत इति कायः संघातोऽस्तिकायः, ततो धर्मश्चासावस्तिकायश्चेति धर्मास्तिकाय, सकलदेशप्रदेशानुगसमानपरिणतिमद्विशिष्टं द्रव्यं, एवमुत्तरत्रापि. न धारयति गतिपरिणतावपि जीवपुद्गलांस्तत्स्वभावतायां नावस्थापयति स्थित्युपष्टंभकत्वात्तस्येत्यधर्मः. आङिति मर्यादया स्वस्वभावापरित्यागरूपया काशंते स्वरूपेणैव प्रतिभासंतेऽस्मिन् पदार्था इत्याकाशः, यदा त्वभिविधावाङ् तदा

आङिति सर्वभावाभिव्याप्त्या काशत इत्याकाशः. एते किमित्याह—त्रयः परिमाणमस्येति त्रिकः, ततो वीप्सायां द्विर्वचने त्रिकत्रिको भेदो येषां ते तथा, एकैकस्त्रिभेद इत्यर्थः, तथाहि—

धर्मास्तिकायो धर्मास्तिकायदेशो धर्मास्तिकायप्रदेशश्च. एवमुत्तरत्रापि. एवमेतेन च तथैव तेनैवाजीवत्वप्रकारेण अद्धा च कालोऽयं त्वेकविध एव वर्तमानसमयलक्षणः, ये पुनरतीतानागतसमयास्तेषां विनष्टानुत्पन्नत्वेन असत्त्वात्, आवलिकादयस्तु पूर्वसमयनिरोधेनैवोत्तरसमयसद्भाव इति तत्त्वतः समुदयसमुत्पाद्यसंभवेन व्यवहारार्थमेव कल्पितः. तथा स्कंदंति शुष्यंति धीयंते च पोष्यंते च पुद्गलानां विचटनेन चटनेन चेति स्कंधाः संहतिविशेषभाजः, पुद्गलाः. दिश्यंते प्रदेशापेक्षया असमानपरिणतिरूपत्वेऽपि देशापेक्षां समानपरिणतिमाश्रित्य विशिष्टरूपतया दिश्यंत इति देशाः स्कंधभागाः. प्रकर्षेण सौक्ष्म्यातिशयलक्षणेन दिश्यंत इति प्रदेशाः. स्कंधानामेव निरंशा भागाः परमाणवः, तदन्यसूक्ष्मतरासंभवात्, प्रकर्षवंतस्ते च तेऽणवश्च परमाणवः, स्कंधरूपत्वापरिणतनिर्विभागद्रव्यरूपाः, एवमजीवाश्चतुर्दशधा भवंतीति गाथार्थः ॥ २९ ॥ एवमेते धर्मास्तिकायादीनां देशादिभेदैश्चतुर्दशधामीलजे दैः पुनरमी कति स्युरित्याह—

॥ मूलम् ॥—धम्माधम्मापुग्गल—नह कालो पंच हुंति अजीवा ॥ चलणसहावो धम्मो । थिरसंठाणो अधम्मो य ॥ ३० ॥ व्याख्या—पूर्वार्धं सुगमं, न वरममी अचिद्रूपा अकर्तारः, पुद्गलमंतरेणामूर्ता निःक्रिया एकैकद्रव्यरूपाश्च, धर्माधर्मावेकजीवप्रदेशप्रमितासंख्यप्रदेशौ लोकव्यापिनौ, आकाशमनंतप्रदेशं लोकालोकव्यापि, पुद्गलाः पुनरनियता अनियतप्रदेशा लोक एव वर्तंते. कालस्त्वनंतसमयात्मको मनुष्यक्षेत्र एव, यदुक्तं—समयावलिकापक्ष—मासर्त्वयनसंज्ञिनः ॥ नृलोक एव कालस्य । वृत्तिर्नान्यत्र कुत्रचित् ॥ १ ॥ इति.

अथैते किंलक्षणा इत्याह—चल्यते गम्यतेऽनेनेति चलनं गमनक्रियाहेतुरेवंविधः स्वभावो यस्य स तथा गतिलक्षण इत्यर्थो धर्मो धर्मास्तिकायः. तथा स्थिरत्वस्य संस्थानं व्यवस्था यस्मादसौ स्थिरसंस्थानः, लुप्तत्वभावप्रत्ययस्य व्यधिकरणो बहुव्रीहि, स्थितिलक्षण इत्यर्थोऽधर्मास्तिकायः, स हि स्थितिपरिणतानां जीवपुद्गलानां स्थितिलक्षणकार्यं प्रत्यपेक्षाकारणत्वेन व्याप्रियत इति स्थित्यैव लक्ष्यते इति गाथार्थः ॥ ३० ॥ तथा—

॥ मूलम् ॥—अवगाहो आगासो । पुग्गलजीवाण पुग्गला चउहा ॥ खंधा देसपएसा । प-

ण् चेव नायव्वा ॥ ३१ ॥ व्याख्या—अवगाहंतेऽवकाशं, लभंतेऽस्मिन्नित्यवगाह आकाश, केषामवगाहः स इत्याह—पुद्गलजीवानां, अनेनावगाहकारणत्वमस्याभिहितं, इह च कालपुद्गलयोः सुज्ञानत्वाल्लक्षणं नाभिहितं, तत्पुनर्वर्तमानलक्षणः कालः, वर्तंते तेन तेन रूपेण भावा भवंति तान्प्रति प्रयोजकत्वं वर्तना, तथाहि—यदमी शीतातपवर्षादय ऋतुविभागेन भवंति, तदवश्यममीषां नैयत्यहेतुना केनापि भाव्यं, स च कालः. शब्दांधकारोद्योतछायातपवर्णगंधरसस्पर्शादिलक्षणाः पुद्गलाः, शब्दस्य च पौद्गलिकत्वं मूर्तता च प्रतिघातविधायित्वादिति, उक्तं च—प्रतिघानविधायित्वा—ल्लोष्टवन्मूर्तता ध्वने. ॥ द्वारवातानुपाताच्च । धूमवच्च परिस्फुटं ॥ १ ॥ अंधकारादीनां तु पौद्गलिकत्वं चक्षुर्विज्ञानविषयत्वादित्यलमतिविस्तरेण. अथ पुद्गलाः कतिभेदा इत्याह—पुद्गलाश्चतुर्धा स्कंधा देशाः प्रदेशाः परमाणवश्चैव ज्ञातव्याः. ननु स्कंधादिभेदाः पूर्वमुक्ता एव, सत्यं, किंतु न पुद्गलत्वेनेति गाथार्थः ॥ ३१ ॥ अथ कालस्वरूपमाह—

॥ मूलम् ॥—समयावलियमुहुत्ता । दियहा पक्खा य मास वरिसा य ॥ भणिउ पलिया सागर । उसप्पिणिउसप्पिणीकालो ॥ ३२ ॥ व्याख्या—समयाः परमनिःकृष्टा कालविशेषाः, ते च

प्रवचनप्रतिपादितपट्टशाटिकापाटनदृष्टांतादवसेयाः आवलिका असंख्येयसमयसमुदयलक्षणाः, मुहू-
र्तो द्विघटिकाप्रमाणाः, दिवसाश्चतुःप्रहरात्मकाः, पक्षाः पंचदशाहोरात्रमाना, चः समुच्चये, मासास्त-
द्द्विगुणाः. वर्षाणि द्वादशमासानि, पलियत्ति उत्तरपदलोपात् पल्योपमानि, एवं सागरोपमाण्यपि.
तत्र पल्योपमप्रमाणं—योजनविस्तृतः पल्य—स्तथा योजनमुच्छ्रितः ॥ सप्तरात्रप्ररूढानां । केशाग्राणां
स पूरितः ॥ १ ॥ ततो वर्षशते पूर्णे । एकैकं केशमुद्धरेत् ॥ क्षीयते येन कालेन । तत्पल्योपममु-
च्यते ॥ २ ॥ पल्योपमदशकोटीकोट्यात्मकानि सागरोपमाणि, अवसर्पिण्युत्सर्पिण्यश्च पूर्वोक्तमानाः, इह चानुक्ता अपि प्राणस्तोकलवादयः कालविशेषाः स्व-
किमित्याह—कालो भणित इति संबंधः. अवसितमजीवतत्वं, अथ शेषाण्याह—
यं ज्ञेयाः, उपलक्षणत्वात् सूत्रस्येति गाथार्थः ॥ ३२ ॥

॥मूलम्॥—सुगइमग्गो पुन्नं । दुग्गइमग्गो य होइ पुण पावं ॥ कम्मसुहासुहआसव । संवरणं तस्स जो नियमो ॥३३॥ व्याख्या—सुगतिः सुदेवत्वसुमानुषत्वलक्षणा, तस्या मार्ग इव मार्गस्त-
त्प्रापकत्वेन, किं? तत्पुण्यं शुभप्रकृतिरूपं, दुर्गतिर्नारकत्वतिर्यक्त्वकुदेवत्वकुमानुषत्वलक्षणा, तस्या मा-
र्गः पूर्ववत्, चकारः पुण्यपापयोरात्मनो बंधतत्वंप्रति समत्वमाक्षिपति, तथा चोद्घुष्यते —पुण्यपाप

क्षयान्मोक्ष इति, भवति पुनः पापं. तथा कर्म मनोवाक्कायव्यापारः, किंविशिष्टं? शुभाशुभं, आश्रवः शुभाशुभमनोवाक्कायव्यापारैर्हि जंतूनां शुभाशुभकर्माणि श्रवंति, तथा चोक्तं—मैत्र्यादिवासितं चेतः। कर्म सूते शुभात्मकं ॥ कषायविषयाक्रांतं । वितनोत्यशुभं पुनः ॥ १ ॥ शुभार्जनाय निर्मिथ्यं। श्रुतज्ञानाश्रितं वच. ॥ विपरीतं पुनर्ज्ञेय—मशुभार्जनहेतवे ॥ २ ॥ शरीरेण सुगुप्तेन। शरीरी चिनुते शुभं ॥ सततारंभिणा जंतु-घातकेनाशुभं पुनः ॥ ३ ॥ इति. संवरणं संवर इत्यर्थः, तस्याश्रवस्य यो नियमो नियंत्रणं निरोध इत्यर्थः, स पुनर्द्वेधा, द्रव्यतो भावतश्च, तत्र ज्ञानावरणादिकर्मादाननिरोधो द्रव्यसंवरः, भवहेतुक्रियानिरोधस्तु भावसंवरः, स च शैलेश्यवस्थायां इति गाथार्थः ॥ ॥ ३३ ॥ तथा—

॥ मूलम् ॥—तवसंजमेहिं निज्जर । पाणिवहाईहिं होइ बंधोत्ति ॥ कम्माण सव्व विगमो । मुक्खो जिणसासणे भणिउ ॥ ३४ ॥ व्याख्या—तप.संयमाभ्यां निर्जरा, इयमपि सकामाकामभेदाद् द्विधा, तत्र सकामा संयमिनां निर्जरणाभिप्रायेण तैस्तपः संयमविधानात्, अकामा तु नारकतिर्यगादिजंतूनां तेषां कर्मनिर्जराभिप्रायविकलानामपि शीतोष्णक्षुतपिपासादिक्लेशैर्विपाकादेव क

र्मनिर्जरणात्. इह च यद्यपि ' अणुकंपकामनिज्जर ' इत्याद्यभिधानादकामनिर्जराया अपि सम्य
त्त्वलाभहेतुत्वेनोपयोगित्वं, तथापि प्राधान्यख्यापनार्थं सकामैवाभिहितेति. तथा प्राणिवधादिभिः,
आदिशब्दान्मृषावादादत्तादानमैथुनपरिग्रहमिथ्यात्वकषायदुष्टयोगप्रमादैर्भवति बंध , एतैश्चाशुभप्रकृ-
तीनामेव बंधः, सद्वेद्यादीनां तु देवपूजादिभिः, इह च—प्रकृतिस्थित्यनुभाग—प्रदेशा विधयोऽस्य
तु ॥ प्रकृतिस्तु स्वभावः स्याद् । ज्ञानावृत्त्यादिरष्टधा ॥ १ ॥ निकर्षोत्कर्षत· काला—न्नियमः कर्म-
णां स्थितिः ॥ अनुभावो विपाकः स्यात् । प्रदेशोंशप्रकल्पनं ॥ २ ॥ तथायमपि संपरायप्रत्ययेर्यापि-
थप्रत्ययभेदाद् द्विधैव, तत्रोपशांतमोहादर्वाक् संपरायप्रत्यय·, परत· पुनरीर्यापथप्रत्ययोऽयोगितोऽर्वा-
गिह पुन· सांपरायिक एवोक्तः, इतरस्य तु प्रकृतित· सद्वेद्यविषयत्वेन, स्थितितो द्विसामयिकत्वेन,
अनुभागतो मंदानुभागत्वेन, प्रदेशतोऽल्पप्रदेशत्वेन, सत्याविषयत्वान्न विवक्षा, इति वाक्यसमासौ,
तथा कर्मणां सर्वविगमो, न तु देशविगम·, तस्यासंसारं प्रतिक्षणमेव संपद्यमानत्वान्मोक्षो जिनशा-
सने भणितः, अनेन शासनांतरेषु यदन्यथान्यथा मोक्षभणनं तत् प्रत्याक्षिपतीति गाथार्थ· ॥३४॥
एवं देवधर्ममार्गसाधुतत्वस्वतत्वं प्रपंचितं, संप्रति यदुक्तमेतद्विषयं श्रद्धानं सम्यक्त्वं तद्बुभूषुराह—

॥ मूलम् ॥—जीवाइ नवपइछे । जो जाणइ तस्स होइ सम्मत्तं ॥ भावेण सद्दहंते । अयाणमाणेवि सम्मत्तं ॥ ३५ ॥ व्याख्या—जीवादिनवपदार्थान् यो जानाति, उत्तरार्धवर्तिनः श्रद्दधच्छब्दस्येहापि संबंधादर्थवशाच्च षष्ट्यंततायां तस्य श्रद्दधत एवेति सम्यक्त्वं, यतोऽस्ति हि स कश्चिदात्मनः परिणामो येन सत्यपि जीवादिस्वरूपावबोधे कस्यचिदेव सम्यक्प्रतिपत्तिर्भवति, न पुनः सर्वस्य, यथा हि सत्यपि दर्शने कस्यचिद्वंकादि जायते, अन्यस्त्वन्यथाभावमिति, तत्र कारणविशेषोऽनुमीयते, एवमिहापि, ततश्च जीवादिस्वरूपपरिज्ञानस्य सम्यग्भावहेतुरात्मपरिणामविशेषः सम्यक्त्वं, न तु ज्ञानमेव, अत एव हि ज्ञानादावरणभेदो विषयभेदः कारणभेदो ज्ञानकारणत्वं च सम्यक्त्वस्य श्रुतकेवलिनोक्तमिति. ननु पूर्वं देवादिविषयं श्रद्धानं सम्यक्त्वमभिहितं, इह तु जीवादिविषयमिति कथं न विरोधः? न, देवादीनां जीवादिष्वेवांतर्भावितत्वात्. अथैतत्परिज्ञानविकलेषु का वार्तेत्याह—भावेनांतःकरणेन श्रद्दधति जिनवचनमेव तत्वमिति प्रतिपद्यमाने अजानत्यपि सम्यक्त्वं, तत्पुनर्द्रव्यसम्यक्त्वमेव, प्राच्यं तु भावसम्यक्त्वं उक्तं हि—जिणवयणमेव तत्तं । इछरुई होइ दव्वसम्मत्तं ॥ जेह नाणभावसद्धा । परिसुद्धं भावसम्मत्तं ॥ १ ॥ यतः—सम्मं अन्ना य गुणा

। सुंदरपरिणम्मि होइ जा सद्धा ॥ तत्तोणंतगुणा खलु । विणायगुणम्मि बोधव्वा ॥ २ ॥ इति गा-
थार्थः ॥ ३४ ॥ तदियता ग्रंथेन देवो धम्मो मग्गो इत्यादि द्वारगाथापूर्वार्धं व्याख्यातं, अधुन ' त-
विवरियं ' इत्यादिकमुत्तरार्धं विवरितुमाह—

॥ मूलम् ॥—दुविहं लोइयमिच्छं । देवगयं गुरुगयं मुणेयव्वं ॥ लोउत्तरंपि दुविहं । देवगयं
गुरुगयं चेव ॥ ३५ ॥ व्याख्या—द्विविधं, लोका जिनमतबहिर्वर्तिनो जनास्तेषु भवं लौकिकं मि-
थ्यात्वं, कथमित्याह-देवान् गतं प्राप्तं देवगतं देवविषयमित्यर्थः, एवं गुरुगतमपि मुणितव्यं ज्ञातव्यं
ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च, तत्र देवगतं यददेवेष्वपि स्त्रीशस्त्राक्षसूत्रादिसूचितरागद्वेषमोहेषु
नाट्याट्टहाससंगीताद्युपप्लवविसंस्थुलेषु प्राकृतजननिर्विशेषेषु देवत्वबुध्या वंदनपूजनसत्कारादिकरणं,
गुरुगतं यदगुरुष्वपि सर्वभोजिषु मिथ्योपदेशिष्वब्रह्मचारिषु महापरिग्रहिषु शाक्यतापसादिषु गुरुत्व-
बुध्या वंदननमस्करणादि, हिंसादिदूषिते मिथ्यादृष्टिनिषेविते धर्मे धर्मबुद्धिरित्येतदपि मिथ्यात्वं, किं-
तु देवप्रणेतृकत्वाद्गुरूपदेश्यकत्वाच्च धर्मस्य तद्ग्रहणेनैव ग्रहणमिति न पृथग्गणनं, लोकेभ्यो वर्णि-
तस्वरूपेभ्य उत्तरा ज्ञानादिगुणमात्त्वादुत्तमा अर्हतस्तेषु भवं मिथ्यात्वमपि लोकोत्तरं, तदपि द्वि-

विधं, देवगतं गुरुगतं च, एवोऽवधारणे, तेन न प्राग्वदत्रापि धर्मविषये मिथ्यात्वं. तत्र देवगतं यद्वीतरागेऽप्युपयाचितादिना रागाद्यारोपणं, उक्तं च—लोगुत्तमदेवम्मिवि । गेइ य देवाण जाणि लिंगाणि ॥ इब्भापरिग्गहाईणि । तेसिमारोवणं मिच्छा ॥ १ ॥ गुरुगतं तु यल्लोकोत्तरलिंगिष्वपि पार्श्वस्थादिषु गुरुत्वबुध्या वंदनादिविधानं, प्रपंचितं चैतत्पुरस्तादिति गाथार्थः ॥ ३५ ॥ अथैतत्परिहारेण फलमाह—

॥ मूलम् ॥—चउब्भेयं मिच्छत्तं । तिविहं तिविहेण जो विवज्जेइ ॥ अकलंकं सम्मत्तं । होइ फुडं तस्स जीवस्स ॥ ३६ ॥ व्याख्या—सुगमा, नवरं तिस्रो विधाः करणकारणानुमतिलक्षणा यस्य तत् त्रिविधं मिथ्यात्वं, त्रिविधेन मनोवाक्कायलक्षणेन करणेनेति गम्यं, इहैवं भावनागाथा—एयं अणंतरुत्तं । मिच्छं मणसा न चिंतइ करेमि ॥ सयमेसो व कारउ । अन्नेण कए व सुठुकयं ॥ १ ॥ एवं वाया न भणइ । करेमि अन्नं च न भणइ करेहि ॥ अन्नकयं न पसंसइ । न कुणइ सयमेव काएणं ॥ २ ॥ कायाए न करेमि । न य कारवेइ अन्नेणं ॥ अनकयं न पसंसइ । जोम्मियसहियाहिचिट्ठाहिं ॥ ३ ॥

तथा विवजाइत्ति, विशेषेण गुरुसाक्षिकत्वलक्षणेन वर्जयति प्रत्याख्याति. अकलंकमतिचार
कालुष्याभावात्, स्फुटं प्रकटमुद्घाटितशिरस्कतयेति. इह च क्वचित् पंचरूपं मिथ्यात्वमुपवर्ण्यते, य-
था—आभिगहियं अणभि—ग्गहं च तह अभिनिवेसियं चेव ॥ सांसइय अणाभोगं । मिछत्तं
पंचहा एवं ॥ १ ॥ तत्राभिग्रहिकं पाखंडिनां स्वस्वशास्त्रनियंत्रितविवेकालोकानां परपक्षप्रतिक्षेपद-
क्षाणां भवति. अनाभिग्रहिकं तु प्राकृतलोकानां सर्वे देवा वंदनीयाः, न निंदनीयाः, एवं सर्वे गुर-
वः सर्वे धर्मा इति. आभिनिवेशिकं जानतोऽपि यथास्थितं वस्तु दुरभिनिवेशविप्लावितधियो गोष्ठा-
माहिलादेरिव भवति. सांशयिकं च देवगुरुधर्मेष्वयमयं वेति संशयानस्य भवति. अनाभोगिकं वि-
चारशून्यस्य एकेंद्रियादेर्वा विशेषविज्ञानविकलस्य भवतीति गाथार्थः ॥ ३६ ॥ एवं यथा सम्यक्त्वं
भवति तथा दर्शितं, अधुनास्यैव कर्मक्षयमूलकारणत्वं व्यतिरेकरूपतया बिभणिषुर्दृष्टांतमाह—

॥ मूलम् ॥—कुणमाणोवि हि किरियं । परिच्चयंतोवि सयणधणभोगे ॥ दिंतोवि दुहस्स
उरं । न जिणइ अंधो पराणीयं ॥ ३७ ॥ व्याख्या—कुर्वन्नपि क्रियां प्रहरणप्रक्षेपादिरूपां, परित्य-
जन्नपि स्वजनधनभोगान्, संग्रामैकतान इति हृदयं, दददपि दुःखस्योरः, शरीरनिरपेक्ष इत्यर्थः, न

जयत्यंधः परानीकमित्यक्षरार्थः. भावार्थः संप्रदायगम्यः, स चायं—श्रीवसंतपुरे पूर्वं । जितशत्रुरभून्नृपः ॥
॥ तस्यांधः शब्दवेधी च । सूरसेनः सुतोऽजनि ॥१॥ तस्यानुजोऽभवद्वीर—सेनः शूरशिरोमणिः ॥
अपरेद्युः परानीकै—र्विष्वक्पुरमरुध्यत ॥ २ ॥ संवर्म्य युद्धश्रद्धालु—रथ ज्येष्ठसुतो रथी ॥ महा-
वीर्यः पुरात्पित्रा । वार्यमाणोऽपि निर्ययौ ॥ ३ ॥ शब्दवेधीतया यत्र । यत्राश्रौषीदसौ ध्वनिं ॥ तत्र
तत्र क्षिपन् बाणा—नवधीद्वैरिणो रणे ॥ ४ ॥ अंध कथंचिन्निश्चित्य । हतशेषैः स वैरिभिः ॥
मौनमास्थाय निपुणैः । पाणिग्राहमगृह्यत ॥ ५ ॥ तदाकर्ण्य कनिष्ठोऽस्य । भ्राता संवर्म्य निर्गतः ॥
अरींश्चक्रे कथाशेषा—नशेषान् शूरशेखरः ॥ ६ ॥ जयश्रिया समं सूर—सेनं प्रत्यानिनाय सः ॥
प्रत्यूहव्यूहरहित—श्चाभूद्भोगैकभाजनं ॥ ७ ॥ इति गाथार्थः ॥ ३७ ॥ तदेवं दृष्टांतमुपदर्श्य दा-
र्ष्टांतिकमाह—

॥ मूलम् ॥—कुणमाणोवि निवित्तिं । परिच्चयंतोवि सयणधणभोगे ॥ दिंतोवि दुहस्स उरं
। मिच्छदिठी न सिज्झइ उ ॥ ८ ॥ व्याख्या—कुर्वन्नपि निवृत्तिमन्यदर्शनाभिहितां, तद्यथा—पंच य-
माः पंच नियमा इत्यादिकां, तथा परित्यजन्नपि स्वजनधनभोगान्, पंचाग्नितपआदिना ददद्पि दुः-

खस्योरो मिथ्यादृष्टिर्न सिद्ध्यति, तुरवधारणे, नैव सिद्ध्यति दर्शनविकलत्वादंधकुमारवदसमर्थः कार्य
सिद्धये, इति गाथार्थः ॥ ३७ ॥ यत एवं ततः किं कर्तव्यमित्याह—

॥ मूलम् ॥—तम्हाकम्माणीयं । जे उ मणो दंसणम्मि पयइज्जा ॥ दंसणवज्जं हि सफला-
णि हुंति तवणाणचरणाणि ॥ ३९ ॥ व्याख्या—यस्मात्सिद्धिमार्गमूलास्पदसम्यग्दर्शनमंतरेण न कः
मंदायः स्यात्तस्मात् कर्मानीकं जेतुमनाः सम्यग्दर्शने प्रयतेत, तस्मिंश्च सति यद्भवति तद्दर्शयति—
दर्शनवतो हि हेतौ यस्मात् सम्यग्दर्शनिनः सफलानि भवंति तपोज्ञानचरणानि, चक्षुष्मतो वीरसे-
नकुमारस्येव संग्रामप्रवर्तनानि, अतस्तत्र यत्नवता भाव्यमिति गाथार्थः ॥ ३७ ॥ किंच चारित्रमप्य
तिशेते सम्यग्दर्शनमित्याह—

॥ मूलम् ॥—भट्ठेण चरित्ताउ । सुट्ठुयरं दंसणं गहेयव्वं ॥ सिझंति चरणरहिया । दंसणरहि-
या न सिझंति ॥ ३८ ॥ व्याख्या—भ्रष्टेन च्युतेन, कुतः? चारित्रात् सुष्टुतरं सुतरां पुनर्बोधिला-
भानुबंधिदर्शनं गृहीतव्यं, शक्यमोक्षोपायत्वात्, यदन्यधायि—जइ न तरसि धारेउं । मूलगुणभरं
सउत्तरगुणं च ॥ मुत्तूण तो तिभूमी । सुसावगत्तं वरतरागं ॥ १ ॥ तथा सिद्ध्यंति चरणरहिताः प्रा-

णिनो दीक्षाप्रवृत्त्यनंतरांतरांतकृत्केवलिनः, दर्शनरहितास्तु न सिध्यंति, अतो दर्शनमेव प्रधानं सिद्धिकारणं तद्भावभावितत्वात्, एतत्पुनर्दर्शननयाभिप्रायादभिधीयते, तत्वतस्तु चारित्रमेव दर्शनज्ञानसमन्वितं मुक्तिकारणं, न पुनः सम्यग्दर्शनमेव, तस्य सर्वगतिष्वपि भावात्, न च मनुजगतिव्यतिरेकेणान्यासु मुक्तिश्चारित्राभावात्, उक्तं हि—सव्वाउवि गइउ । अविरहिया नाणदंसणधरेहिं ॥ ता मा कासि पमायं । नाणेण चरित्तरहिएण ॥ १ ॥ यद्यप्यंतकृत्केवलिनश्चरणरहिता अपि सिध्यंतीत्यभिहितं तदपि नातिपेशलं, यतस्तेषामपि सर्वसंवररूपचारित्रव्यतिरेकेण सिद्धेरभावात्, चारित्रव्यतिरेकेण केवलज्ञानस्याप्यनुत्पादाच्च. तथा च स्वयमेव वक्ष्यति—चरणकरणेहिं रहिउ । न सिज्झइ सुठु सम्मदिठीवि ॥ इति गाथार्थः ॥ ३९ ॥ इत्थं सम्यक्त्वस्वरूपमभिधाय तद्भेदानाह—

॥ मूलम् ॥—एगविह डुविह तिविहं । चउहा पंचविह दसविहं सम्मं ॥ मोक्खतरुबीयभूयं । संपइरायाव धारेज्जा ॥ ४० ॥ व्याख्या—तत्रैकविधं तत्वरुचेः सर्वत्रानुगतत्वात् १. तस्या एव नैसर्गिकाधिगमजातभेदविवक्षया द्विविधं, तत्र नैसर्गिकं जातिस्मरादिप्रभवं, अधिगमजं तु गुर्वाद्युपदेशात्तत्वाधिगमसंभवं २. अविवक्षितनिसर्गाधिगमक्षायिकक्षायोपशमिकौपशमिकभेदविवक्षया वेदकस्य

क्षायोपशमिकत्वेन विवक्षणात्सास्वादनस्य चानंतानुबंधिकषायदूषितत्वेनाविवक्षणाच्च त्रिविधं, तत्र क्षायिकमनंतानुबंधिमिथ्यात्वमिश्रसम्यक्त्वप्रक्षयाज्जातं. ननु सम्यक्त्वक्षये कुतः सम्यग्दृष्टित्वं? उच्यते—निर्मदनीकृतकोद्रवकल्पा अपनीतमिथ्यात्वपुद्गला एव सम्यक्त्वं, तत्परिक्षये च तत्त्वरुचिपरिणामानिवृत्तेः प्रत्युत श्लक्ष्णाभ्रपटलापगमे चक्षुर्दर्शनवद्विशुद्धतरापत्तेः. क्षायोपशमिकं पुनरेवं—

इह कश्चित्प्रवाहतोऽनादिमिथ्यादृष्टिस्तथाविधधर्माचार्यसामग्रीसमवधाने सत्यपूर्वकरणेनाभिमुखीभवन्मिथ्यात्वपुंजकान्मिश्रपुंजकं करोति, मदनकोद्रवपुंजकादिवार्धविशुद्धपुंजकं. ततोऽपि सम्यक्त्वपुंजकमर्धविशुद्धकोद्रवपुंजकादिव सर्वविशुद्धतरपुंजकं, तच्च निर्मलतयात्मनस्तत्त्वरुचेरावृतिं न करोति. स्वच्छाभ्रपटलगृहकमिव प्रदीपप्रभायाः. ततस्तृतीयसम्यक्त्वपुंजकं विशिष्टविशिष्टविपाकतो वेदयन् जंतुः क्षायोपशमिकसम्यग्दर्शनी भण्यते. यत उक्तं—'मिच्छत्तं जमुइन्नं' उदयावलिकास्थं 'तं खीणं अणुइयं तु उवसंतं' विष्कंभितोदयमपनीतमिथ्यास्वभावं चोपमुच्यते, तत्र विष्कंभितोदयं शेषमिथ्यात्वं. अपनीतमिथ्यास्वभावं च विशोधितसत्त्वपुंज एव 'मीसीभाव' क्षायोपशमरूपं 'परिणयं वेइज्जंतं, प्रदेशतो मिथ्यात्वं, रसतस्तु सम्यक्त्वं 'खओवसमं' औपशमिकं तु—उव-

सामग्गसिद्धिगयस्स । होइ उवसामियं तु सम्मत्तं ॥ जावा अकयतिपुंजो । अखवियमिछो लहइ सम्मं ॥ १ ॥ इहाद्यं पतीतमेव, द्वितीयं तु विव्रियते—

इह यथाप्रवृत्तिकरणेन सागरोपमकोठाकोटेरंतर्मिथ्यात्वस्थितिमानीयोदयक्षणादंतर्मुहूर्तमतिक्रम्यापूर्वकरणानिवृत्तिकरणाभ्यामंतर्मुहूर्तप्रमाणमंतरकरणं करोति जंतुः, ततस्तस्मादधस्तन्युपरितनी चेति मिथ्यात्वस्य स्थितिद्वयं भवति. ततोऽधस्तनीं स्थितिमंतर्मुहूर्तेन वेदयित्वांतरकरणं प्राप्तः प्रथमसमयादेवौपशमसम्यक्त्वं लभते, तत्पुनर्न पुद्गलानुभवरूपं, अपित्वध्यवसायमात्रं, यदुक्तं—ऊसरदेसं दड्ढि—ल्लयं च विज्झाइ वणदवो पप्प ॥ इयमिछस्स अणुदए । उवसमसम्मं लहइ जीवो ॥ १ ॥ तच्चावस्थितस्वरूपं, यदाह—जं मिछस्साणुदओ । न हायए तेण तस्स परिणामो ॥ जं पुण सयमुवसंतं । न वट्टएवछिन्न तेण ॥ २ ॥ औपशमिकस्य च क्षायोपशमिकादयं विशेषः, क्षायोपशमिकं प्राक्समितमनुसमयमुदेति, प्रदेशतश्च वेद्यते क्षीयते च स्थगितमपि कोऽद्रवदृष्टांतात्, नत्वस्मिन्नयं प्रकारोऽस्ति, उदयविष्कंभमात्रत्वाद्विशून्याहारवत्, अस्मादेव च भ्रश्यंतो द्वींद्रियादिषूत्पद्यंते, नान्यस्मात्, अन्यतो झटिति मिथ्यात्वप्राप्त्या षडावलिककालासंभवात.

कारकरोचकदीपकभेदतो वा त्रिविधं, कारकं साधूनामिव, रोचकं श्रेणिकादेरिव, दीपकमंगार-
मर्दकादेरिव. वेदकस्य पृथग्विवक्षया चतुर्धा, तत्स्वरूपं च—बावीसमंतमोहस्स । सुद्धदलियकयंमि
श्रादत्ते ॥ जीवस्स चरमसमये । श्रणुन्नवणे वेयगं होइ ॥ १ ॥ इह च क्षायोपशमिकं समस्तपरि-
वेपिनभोजनसमानं. वेदकं तु चलतुल्यमिति भेदविवक्षा. ईपत्तत्वश्रद्धानत्वेन सास्वादनस्यापि स-
म्यक्त्वविवक्षया पंचविधं, तत्पुनः—उवसमसमत्ताउ । चवउं मिछं अपावमाणस्स ॥ सासायणस-
म्मत्तं । गवलियं होइ नायवं ॥ १ ॥ इह च क्षायिकं सात्यपर्यवमिनं, क्षायोपशमिकं तूत्कृष्टतः पू-
र्वकोटिपृथक्त्वाधिकानि षट्षिसागरोपमाणि, जघन्यतोंतर्मुहूर्तं, औपशमिकमुभयथाप्यंतर्मुहूर्तं. वेदक-
मेकसामयिकं. सास्वादनमुत्कर्षतः षडावलिकं, जघन्यतस्त्वेकसामयिकं. एतेषामेकैकस्य निसर्गा-
धिगमभेदविवक्षया दशविधं सम्यक्त्वमिति सर्वत्र योगः. निसर्गरुच्यादिभेदतो वा दशविधं, तथाच
—निस्सग्गु १ वएसरुई २ । आणारुई ३ सुत्त ४ बीयरुई य ५ ॥ अभिगम ६ विछाररुई ७ ।
किरिया ८ संखेव ९ धम्मरुई १० ॥ १ ॥ रुचिशब्द सर्वपदेषु दृश्यः, सम्यक्त्वे गुणेऽपि वाच्ये गु-
णिरूपतयाभिधानं तयोः कथंचिदन्यत्वख्यापनाय. एतेषां व्याख्यानगाथाः—जो जिणदिठे भावे ।

चउव्विहे ( द्रव्यादिरूपतया ) सद्दहाइ सयमेव ॥ एमेव नन्नहत्ति य । निस्सग्गरुइत्ति नायव्वो
॥ १ ॥ एए चेव उ भावे । उवइट्ठे जो परेण सद्दहइ ॥ छउमत्थेण जिणेण व । उवएसरुइ
नायव्वो ॥ २ ॥ रागो दोसो मोहो । अन्नाणं जस्स अवगयं होइ ॥ ( देशत एव न सर्वतः
आणाए रोयंतो । ( आज्ञयैवाचार्यसंबंधिन्या तथेति श्रद्दधानो मापतुषादिवत् ) सो खलु आण
रुई नाम ॥ ३ ॥ जो सुत्तमहिज्जंतो । सुएण उगाहए उ सम्मत्तं ॥ अंगेण बाहिरेण व । सो
सुत्तरुइत्ति णायव्वो ॥ ४ ॥ एगपएणेगाइं । पयाइं जो पसरइ उ सम्मत्ते ॥ उदएव्व तेल्लबिंदू
सो बीयरुइत्ति नायव्वो ॥ ५ ॥ तत्वैकदेशोत्पन्नरुचिरपि क्षयोपशमविशेषात् समस्ततत्वेषु रुचिमान्
भवतीत्यर्थः. सो होइ अभिगमरुई । सुयनाणं जेण अत्थओ दिठं ॥ एक्कारस अंगाइं । पइन्नगा दि-
ट्ठिवाओ य ॥ ६ ॥ दव्वाण सव्वभावा । ( पर्यायाः ) सव्वपमाणेहिं जस्स उवलद्धा ॥ ( ये य-
द्विषयास्ते तेन ) सव्वाहिं नयविहीहिं । वित्थाररुइत्ति नायव्वो ॥ ७ ॥ विस्तारविषयत्वेन ज्ञानस्य रु-
चेरपि तद्विषयत्वादस्य ज्ञानपूर्विकाभिरुचिः. दंसणनाणचरित्ते । तवविणए सच्चसमिइगुत्तीसु ॥ जो
किरिया भावरुई । सो खलु किरियारुई नाम ॥ ८ ॥ दर्शनाद्याचारानुष्ठाने यस्य भावतो रुचिरस्ती-

त्यर्थः. चारित्रांतर्गतत्वेऽपि तपआदीनां पुनर्भणनं विशेषमुक्त्यंगत्वख्यापनार्थं. अणभिगहिय कुदिट्ठी । संखेवरुइत्ति होइ नायव्वो ॥ अविसारउ पवयणे । अणभिगहिउ य सेसेसु ॥ ९ ॥ उक्तविशेषणो यः संक्षेपेणैव चिलातीपुत्रवत् प्रशमादिपदत्रयेण तत्वरुचिमवाप्नोति ससंक्षेपरुचिरित्यर्थः. जोअत्थिकायधम्मं । ( अस्तिकायधर्मादीनां धर्मं गत्युपष्टंभादिपर्यायं ) सुयधम्मं खलु चरित्तधम्मं च ॥ सद्दहइ जिणाभिहियं । सो धम्मरुइत्ति नायव्वो ॥ १० ॥ धर्मेषु पर्यायेषु धर्मं वा श्रुतधर्मादौ रुचिरस्येति कृत्वा. शिष्यमतिव्युत्पादनार्थं वेत्थमुपाधिभेदेन सम्यक्त्वभेदाभिधानं, अन्यथा हि निसर्गोपदेशयोरधिगमादौ वा क्वचित् केषांचिदंतर्भाव इति भावनीयमिति. एवं सम्यक्त्वस्य कर्मक्षयलक्षणमनंतरफलं तद्भेदाश्च प्रतिपादिताः, संप्रति तस्यैव परंपरफलप्रतिपादनपुरस्सरं तत्पालने दृष्टांतमाह—सम्यक्त्वं मोक्षतरोर्बीजभूतमनेन मोक्षः, परंपरफलमेतस्येत्यभिहितं, संप्रतिराजवद्धारयेत्, संप्रदायगम्यश्चायमर्थस्तथाहि—

अस्ति वत्सेषु कौशांबी । नगरी निर्जितालका ॥ वसंति धनिनो यस्या—मतिपुण्यधनेश्वराः ॥ १ ॥ तस्यां पुर्यामथाचार्यौ । महागिरिसुहस्तिनौ ॥ युगाग्रण्यावनुग्रामं । विहरंतावुपेयतुः ॥ २ ॥

तत्रैकदा त्रडुर्भिक्षे । भिक्षाहेतोः सुहस्तिनः ॥ साधुसंघाटकः प्राप—देकमीश्वरमंदिरं ॥ ३ ॥ धन्यंम-
न्यस्तमानम्य । गृहेशः सपरिच्छदः ॥ खंडखाद्याभिर्भोज्यै—रतिप्राज्यैरुपास्थितः ॥ ४ ॥ तदाग्रहाज्ज-
गृहतुः । स्तोकस्तोकं तु तौ मुनी ॥ भिक्षाकस्तादृगद्राक्षी—देकस्तद्विस्मितेक्षणः ॥ ५ ॥ विवेक-
लोचनस्यांधं—करिण्या व्यथितः क्षुधा ॥ प्रगल्भैश्चाटुभिर्भोज्यं । प्रार्थयामास तौ ततः ॥ ६ ॥ भ-
द्र भक्तं गुरोरेत—दिति तौ प्रत्यवोचतां ॥ पृष्ठलग्नस्ततस्ताभ्या—मन्यर्ण सोऽगमद्गुरोः ॥ ७ ॥ त-
द्दर्शनोद्भवानंद—बाष्पैः खेदं विनुद्य सः ॥ ययाचे भक्तमाचार्य । कारुण्यैकसुधानिधिं ॥ ८ ॥ भ-
क्तदानाद्भविष्यंतं । प्रेत्य शासनदीपकं ॥ श्रुतातिशयतो ज्ञात्वा । तत्ववित्तमभाषत ॥ ९ ॥ जिघत्सु-
र्वत्स चेद्दीक्षां । कक्षीकुरु तदार्हतीं ॥ इति तं दीक्षितं स्वैरं स्निग्धस्वादून्यभोजयत् ॥ १० ॥ तेना
तिमात्रभुक्तेन । नक्तं जातविसूचकः ॥ मृत्युमासादयामास । प्रणिधानपरायणः ॥ ११ ॥ इतश्च पा-
टलीपुत्र—मित्यस्ति नगरं गुरु ॥ मौर्यवंशध्वजश्चंद्र—गुप्तस्तत्राभवन्नृपः ॥ १२ ॥ ततो जनदृशा-
मिंदु—र्बिंदुसारनृपोऽजनि ॥ मूर्ध्ना यच्छासनं नृपै—र्दध्रे बिंदुरिवाक्षरैः ॥ १३ ॥ तस्मादासीदशोक-
श्री—र्भूधरो हिमवानिव ॥ पावनी व्यानशे कीर्ति—गंगा यत्प्रभवा भुवं ॥ १४ ॥ प्राणेभ्योऽपि

प्रियः पुण्यै—र्लक्षितो राजलक्षणैः ॥ अभूदायतदोर्नालः । कुणालस्तस्य नंदनः ॥ १५ ॥
अनिष्टशंकिना मातृ—सपत्नीभ्यः स भूभृता ॥ बालोऽप्यवंत्यां कौमार—भुक्तौ प्रेम्णा व्यसृज्यत ॥ १६ ॥ राजा स्वहस्तविन्यस्त—वर्णानि लिखितान्यथ ॥ प्राहिणोदन्वहं स्नेहा—मृतस्यंदीनि सूनवे ॥ १७ ॥ कलाग्रहणकालं च । सूनोर्ज्ञात्वान्यदा नृपः ॥ स्वयं लिखित्वा लिखित—मवंत्यां प्राहिणोदिति ॥ १८ ॥ अधीयतामधिकृता । हितचिंतापरश्चिरं ॥ कुमारस्त्यक्तनिःशेषा—परव्यापारमादरात ॥ १९ ॥ असंवृत्यैव तं लेखं । देहचिंताचिकीर्षया ॥ नृपः प्रमादादुद्घाटं । मुक्त्वा निधिमिवोज्झितः ॥ २० ॥ नृपपार्श्वोपविष्टासीत् । काचिद्देवी तदा किल ॥ सा लेखं वाचयंत्युच्चै—रन्मत्सरपिच्छिला ॥ २१ ॥ दत्वा बिंदुमकारस्य । व्यधादंधीयतामिति ॥ कौशलं कुसृतौ किंचिदनाचार्यं हि योषितां ॥ २२ ॥ निवृत्तेन पुनर्लेखो—ऽप्रतिवाच्यैव भूभुजा ॥ संवर्त्य मुद्रितः स्थूल । प्रमादस्ताद्दशामपि ॥ २३ ॥ तं राज्ञा प्रेषितं प्रेक्ष्य । कुमारः पिप्रियेतरां ॥ क्षुधानिव शिशुः प्राप्य । विषाक्तमपि मोदकं ॥ २४ ॥ उन्मुद्याधिकृतेनोच्चै—र्यावल्लेखः प्रवाचितः ॥ तावदालोकि दुर्वाचं । दुःश्रावं चेदमग्रतः ॥ २५ ॥

तदुच्चारणदुःस्थेऽस्मिन् । मौनमास्थाय तस्थुषि ॥ उत्सुकस्तत्कराल्लेखं । कुमारः स्वयमग्रहीत् ॥ २६ ॥ लेखार्थाधिगमेऽध्यासी—दवार्यं मौर्यशासनं ॥ तच्चेन्मयि स्खलत्यन्यः । कस्तदा पालयिष्यति ॥ २७ ॥ इत्यानंज दृशौ सद्यः । संतप्तायःशलाकया ॥ मामेति तुमुलं जल्प—त्यनल्पं मंत्रिमंडले ॥ २८ ॥ किंवदंती ददंती सा । मूर्छामूर्वीपतेर्भृशं ॥ प्राविशत्कर्णयोस्तप्त—त्रपुधारानुकारिणी ॥ २९ ॥ मूर्छांते शोकसंताप—निर्यद्बाष्पप्लुतेक्षणः ॥ विललाप विशामीशो । रोदयन्निव रोदसी ॥ ३१ ॥ हा वत्स स्वच्छहृदय । कुलाधार कलानिधे ॥ विनीत स्फीतदाक्षिण्य । विवेकिन् मधुराकृते ॥ ३२ ॥ किमेवमविविच्यैव । विमर्शैकशिरोमणे ॥ व्यधास्त्वं निर्घृणं कर्म । मम भाग्यविपर्ययात् ॥ ३३ ॥ संगतश्चैवमुर्वीशः । शोकोत्कर्षवशां दशां ॥ कथंचिन्मंत्रिभिर्विद्या—वयोवृद्धैरबोध्यत ॥ ३४ ॥

राज्यानर्ह इति ग्राम—मेकं दत्वास्य जीवने ॥ उज्जयिन्याः प्रभुत्वेऽन्यं । सुतं राजा न्ययोजयत ॥ ३५ ॥ न्यायेन लालयन् ग्राम—लोकं गीतकलाप्रियः ॥ कुणालः कालममर—कुमारक इवानयत् ॥ ३६ ॥ स रंकजीवस्तत्रास्य । सुतत्वेनोदपद्यत ॥ ततः कुणालो राज्यार्थी । पाटलीपु-

त्रमाययौ ॥ ३७ ॥ तत्रात्मवश्यतां पौरान् । मृगानिव नयन्नयं ॥ विपंचीश्रुतिभिः स्फीतं । प्रगीतो-
गीतमदस्तुतं ॥ ३८ ॥ तद्गीतकलया सद्यो । बंदितामधिरोपिताः ॥ तं राज्ञः पुरतः पौरा । वर्णया-
मिति चक्रिरे ॥ ३९ ॥ अस्ति कश्चिदिहायातो । देव संप्रति गायनः ॥ यस्य श्रेष्ठा कला गीतौ ।
वर्ण्यते किमतः परं ॥ ४० ॥ ततस्तमाह्वयीश । कौतुकोत्सुकमानसः ॥ व्यंगत्वाच्चांतरे कृत्वा । प्र-
तिशीरामजीगपत् ॥ ४१ ॥ बभाण प्रीतितोऽत्यर्थं—मथ गीतामृतोर्मिभिः ॥ हंहो वृणु वरं स्वैरं ।
त्वं गायकमतल्लिक ॥ ४२ ॥ कलितावसरः काल—वेदी स्वाजन्यसूचकं ॥ जगौ प्रगल्भकलवाक्
। कुणालः श्लोकमीदृशं ॥ ४३ ॥ प्रपौत्रश्चंद्रगुप्तस्य । बिंदुसारस्य नप्तृकः ॥ अशोकश्रीतनुजोंधो ।
याचते तात काकिणीं ॥ ४४ ॥ चिरं रूढमपि प्राच्य—शोकमुद्भिन्नमुद्वहन् ॥ तस्मात्तद्वचसः खड्ग
—प्रहारमिव गर्जितात् ॥ ४५ ॥ आगच्छागच्छ वत्सेति । दूरोदंचद्भुजो नृपः ॥ आहूय सस्वजे सूनुं
। वक्षः सिंचन् घनाश्रुभिः ॥ ४६ ॥ युग्मं ॥ सगद्गदमवादीच्च । याच्योऽहं त्वं च याचकः ॥ का-
किणीति त्वया क्षुद्रं । किमेतद्याचितं ततः ॥ ४७ ॥ अथोक्तं मंत्रिभिर्नाथ—मिदं किंतु बहु प्रभो
॥ राज्यं हि काकिणी राज्ञां । कुमारस्तदयाचत ॥ ४८ ॥ सास्रू प्राह नृपः पुत्र । राज्यं लभ्यं त्व-

या भृशं ॥ त्वन्नेत्रे हरता किंतु । वेधसा न खलायितं ॥ ४९ ॥
सोऽन्यधात्तात राज्याय । मौक्तिकायोषबिंदुवत् ॥ नार्होऽस्मि नूनमर्हस्तु । सुतो मे मेघबिंदु-
वत् ॥ ५० ॥ राजोचे ते कदा सूनुः । सोऽन्यधात्तात संप्रति ॥ ततः प्रीतः सुतं वेगा—दानये-
त्यादिशन्नृपः ॥ ५१ ॥ तमानीतं ततः पश्यन् । विनिद्रैः स्वैर्विलोचनैः ॥ नृभृन्नांगेषु मातिस्म । वि-
स्मयस्मेरमानसः ॥ ५२ ॥ तेनारुणकरेणोच्चै—र्बालेनोत्संगसंगिना ॥ भास्वता भूभृतां मध्ये । स
पूर्वाद्रिरिवाबभौ ॥ ५३ ॥ पित्रा यत्संप्रतीत्युक्तं । तेन नामक्रियोत्सवे ॥ भूपतिः संप्रतिरिति । बा
लकस्याभिधां व्यधात् ॥ ५४ ॥ निर्विघ्नमनयद् वृद्धिं । कलाः किंचाध्यजीगपत् ॥ उज्जयिन्यां च
साम्राज्ये । प्रौढिप्रासमतिष्टिपत् ॥ ५५ ॥ तस्यासीमप्रतापस्य । शासनं मनुजेश्वराः ॥ अवचूलकलां
निन्यु—र्दुरतिक्रमविक्रमाः ॥ ५६ ॥ किंचार्धभरतक्षेत्रे । नासीत्कश्चिदसौ नृपः ॥ नास्मै ननाम सं-
प्रीत्या । प्राभृतीकृतवैभव ॥ ५७ ॥ आचंद्रगुप्ताद्वर्धिष्णु—र्मौर्यवंशः शनैः शनैः ॥ संप्रतिनृपतौ प्रा-
पत् । परां वृद्धिं श्रियान्वितां ॥ ५८ ॥ अन्यदा वंदितुं जीव—त्स्वामिनीं प्रतिमां गुरुः ॥ समवास
रतां तत्र । महागिरिसुहस्तिनौ ॥ ५९ ॥

तत्राथ रथयात्रायां । राजमंदिरमीयिवान् ॥ पुरःप्रसृमरोद्दाम—नानानाट्योत्सवो रथः ॥ ६० ॥
तत्र वातायनासीनः । संप्रतिः पृथिवीपतिः ॥ संघसंगतमद्राक्षी—द्गुरुमार्यसुहस्तिनं ॥ ६१ ॥ तत्तत्क-
चिदमूनस्मि । दृष्टपूर्वी मुनीश्वरान् ॥ इत्यूहां चक्रिवान् यावत् । तावत्प्राग्जातिमस्मरत् ॥ ६२ ॥ त
तश्चिंतामणेर्लाभा—दधिकं मुदमुद्वहन् ॥ कल्याणिभक्तिरागत्य । वंदतेऽसौ गुरुक्रमान् ॥ ६३ ॥
आख्यद्विस्तरतस्तस्य । धर्मं जैनश्वरं गुरुः ॥ प्रकाशयितुमात्मान—मप्राक्षीदथ पार्थिवः ॥ ६४ ॥
भगवन् कथयाव्यक्त—सामायिकफलं किमु ॥ गुरुर्जगाद राज्यादि—रव्यक्तसमताफलं ॥ ६५ ॥
संजातप्रत्ययेनोक्त—मेवमेतन्न संशयः ॥ परं प्रत्यभिजानीत । मां नवेति निवेद्यतां ॥ ६६ ॥ श्रुतो-
पयोगाद्विज्ञाय । प्राग्भवं भगवानथ ॥ प्राह प्रत्यभिजानामि । शिष्योऽभूः प्राग्भवे मम ॥ ६७ ॥
एवं संवादितज्ञानि—पादपीठेऽलुठन्नृपः ॥ भवत्प्रसादविस्फूर्ति—रेषेति स्तुतवान् गुरुं ॥ ६८ ॥
तदाप्रभृति सम्यक्त्व—मूलं धर्ममगारिणां ॥ प्रपेदे गुरुपादांते । शंकादिभिरकश्मलं ॥ ६९ ॥ शृ-
ण्वानः श्रुतमश्रांत—श्रद्धासंशुद्धमानसः ॥ जीवाजीवादितत्त्वानि । समंतादधिजग्मिवान् ॥ ७० ॥
विधिना जिनवेश्मानि । तद्बिंबानि च निर्ममे ॥ तेषां च स्थापनान्युच्चैः प्राज्यन्याय्यवसुव्ययात् ॥

॥ ७१ ॥ परःसहस्त्रैर्नृभृद्भि—रहंप्रथमिकैर्वृतः ॥ रथयात्रां व्यधात् कुर्वन् । रथे पुष्पादिरोहणं ॥७२॥ अ
तासु वासःफलस्फेर—पुष्पपाद्यकपर्दकान् ॥ रथारूढो निचिक्षेप । दिक्षु कृत्यविचक्षणः ॥ ७३ ॥ अ
ग्रण्यं सर्वपूज्यानां । श्रीसंघं भृशमार्चिंचत् ॥ आवार्धैः पटहध्वानै—रमारिमुदघोषयत् ॥ ७४ ॥
किं बहुना? तथा कथंचिज्जैनेंद्रं । सिषेवे धर्ममात्मनि ॥ अजीगमद्यथा सात्म्यं । संप्रतिः प-
रमार्हतः ॥ ७५ ॥ कुलकं ॥ अन्यदा प्राग्भवोद्भूत—क्षुदातंकस्मृतेर्नृपः ॥ उज्जयिन्याश्चतुर्दिक्षु ।
सत्रागाराण्यचीकरत् ॥ ७६ ॥ गुणवानगुणः स्वीयः । परो वेत्यविशेषितं ॥ विश्रब्धस्तेषु भुक्त्वाथ ।
सुष्वाप प्रमदाज्जनः ॥ ७७ ॥ भक्त्या विज्ञपयामास । गुरुं चार्यसुहस्तिनं ॥ अनुगृह्णीत मां भक्त-
पानादिग्रहणाद्विभो ॥ ७८ ॥ प्रत्यवोचन्नृपं सूरिः । कल्याणी ते मतिर्नृप ॥ किंत्वाद्यांतिमतीर्थ्यानां
। राजपिंडो न कल्पते ॥ ७९ ॥ आहूय सत्राधिकृता—नन्येद्युरवदन्नृपः ॥ सत्रेष्वन्नादिना भुक्त-
शेषेण क्रियते किमु ॥ ८० ॥ अवदंस्ते तदस्माकं । भवनेषूपयुज्यते ॥ ततस्तानादिशद्भद्रा—
स्तत्साधुभ्यः प्रयच्छत ॥ ८१ ॥ अहं वो वितरिष्यामि । मूल्यं बत समर्गलं ॥ यन्नामी राजपिंडत्वात्
। किंचिद् गृह्णंति मद्गृहे ॥ ८२ ॥ एवं पौपिकसार्पिष्क—प्रमुखा वणिजः स्वयं ॥ राज्ञा सप्रणयं

प्रोक्ताः । प्रदाने स्वस्ववस्तुनः ॥ ७३ ॥ राजाज्ञा स्यात्कृता पुण्यो—पार्जना च यथातथा ॥ इत्या-
लोच्य वचो राज्ञः । सर्वं ते वहु मेनिरे ॥ ७४ ॥ ततः स्वादिष्टपानान्न—खाद्यादीन्यादराज्जनैः ॥
वस्त्रपात्राणि चात्यर्थं । प्रत्यलात्यंत साधवः ॥ ७५ ॥ महागिरिश्च तद् ज्ञात्वा—नुशास्तिस्म सुह-
स्तिनं ॥ आर्येदं भक्तपानादि । नैपणाशुद्धिमृच्छति ॥ ७६ ॥ शिष्यानुरागतः सोऽपि । तदवद्यं वि
दन्नपि ॥ अपहुतेस्म ही मोह—स्तादृशेष्वप्यनर्गलः ॥ ७७ ॥
प्रभो नैवात्र शंकापि । कार्या यस्मादसौ प्रजा ॥ भाक्तिकं वीक्ष्य राजन—मस्मानाद्रियतेतरां
॥ ७८ ॥ ययुक्तं—राज्ञि धर्मिणि धर्मिष्ठाः । पापे पापाः समे समाः ॥ राजानमनुवर्तंते । यथा रा-
जा तथा प्रजा ॥ ७९ ॥ आः किमस्मात्परं पापं । यदकृत्यं विदन्नपि ॥ सेवते किंच कृत्यत्वं । त-
स्यैव स्थापयत्यसौ ॥ ८० ॥ तदुत्पथस्थितस्यास्य । सहावासेन किं मम ॥ इति वुध्ध्वा व्यधात्तस्य
। विसंभोगं महागिरिः ॥ ८१ ॥ युग्मं ॥ सुहस्तिनि ततः सद्यो । विवेकः कश्चिदुद्ययौ ॥ अन्यो-
न्यदर्पणाज्ञात—श्चित्रभानुरिवारणौ ॥ ८२ ॥ ततोऽसौ गर्हमाणः स्वं । पादलग्नो महागिरिं ॥ प्र-
तिपद्य स्वकं दोपं । क्षमयामास तत्क्षणात् ॥ ८३ ॥

प्रायश्चित्तं वितीर्यार्य—महागिरिरमुं रयात् ॥ अंतश्चकार मंमत्व्याः । संतो हि प्रह्ववत्सलाः ॥ ॥ ९४ ॥ अन्यदा संप्रतिर्नृपः । सर्वानाजूहवन्नृपान् ॥ अनार्यानार्यमूर्धन्यो । जैनशासनभावितः ॥ ॥ ९५ ॥ धर्मं विस्तरतस्तेषा—माचचक्षे विचक्षणः ॥ सर्वतो गमयित्वा च । ग्राहयामास दर्शनं ॥ ॥ ९६ ॥ प्रभुश्चेदस्मि वः सम्यग् । भवत श्रावकास्तदा ॥ एतदेवार्थये युष्म—न्नार्थादीत्यादिदेश च ॥ ९७ ॥ तेऽभिनंद्य वचो राज्ञः । स्वदेशेषु तदाज्ञया ॥ ययुर्धन्यतमंमन्याः । प्राप्त्या धर्ममहानिधेः ॥ ९८ ॥ ततस्ते स्वीयदेशेषु । चंडडिंडिमवादनात् ॥ अहिंसां घोषयामासुः । संप्रतिभक्तमानिनः ॥ ९८ ॥

चक्रुश्चैत्यानि तेष्वर्ह—च्चारुबिंबान्यतिष्टिपत् ॥ रथांश्च रथयात्राश्च । व्यधुः संप्रतिराजवत् ॥ ॥ ९९ ॥ अथान्यदा पुनस्तेषां । धर्मे स्थैर्यविधित्सया ॥ श्रीसुहस्तिनमाचार्य—मवंतीशो व्यजिज्ञपत् ॥ १०० ॥ प्रभो प्रत्यंतविषयान् । बोधयंतो महर्षयः ॥ विहरंति न किं सत्वो—पकारे ह्यादरः सतां ॥ १ ॥ आचार्यः प्रत्यवोचत्ते । कल्प्याकल्प्यं तथैषणां ॥ न जानंति तदेषु स्या—न्मुनीनां विहृतिः कथं ॥ २ ॥ मुनिचर्याबहिर्भूते—ष्वनार्येषु हि जग्मुषः ॥ प्रायश्चित्तसमापत्ति—र्यतेः सूत्रे

निगद्यते ॥ ३ ॥ ततस्तान् भावयामास । मुनिवेषधरैर्भटैः ॥ अनार्यदेशान्नृपति—रसाध्यं किं हि धीमतां ॥ ४ ॥ तैर्नैव्यमेषणापूर्वं । गृह्णद्भिः सर्वतस्तदा ॥ कल्प्याकल्प्यं च जल्पद्भि—र्भावयामासिरे जनाः ॥ ५ ॥ ततस्तेषु सुखं साधु—विहारः समजायत ॥ क्षेत्रेषु बीजनिक्षेप । इव कृष्टेषु धीधनैः ॥ ६ ॥ कुडुक्कांध्रमहाराष्ट्र—द्रविडाद्यास्तदादितः ॥ अनार्यदेशा साधूनां । जग्मुः सुखविहारतां ॥ ७ ॥ श्रीमान् संप्रतिराजेंद्रो । मौर्यवंशोज्ज्वलध्वजः ॥ परसहस्रैर्दुर्धर्पः । सैन्यैरिव गुणाढ्यैः ॥ ८ ॥ नातिक्रामन् क्वचिद्भन—त्रयीं शक्तित्रयीमिव ॥ धर्मं न्यायमिव स्थाने । प्रयुंजानश्चतुर्विधं ॥ ९ ॥ पुरस्कुर्वन्नुपायज्ञ—ममात्यमिव सद्गुरुं ॥ समूलघातमाहत्य । मिथ्यात्वमिव शात्रवं ॥ ॥ १० ॥ इत्थं स्वस्येव जनस्य । निस्सीममहिमावधिः ॥ श्रीशासनस्य साम्राज्य—मेकछत्रमसूत्रयत् ॥ ११ ॥ इत्थं यथा परिपचेलिमपुण्यलभ्य—मुच्चैस्तरामधृत संप्रतिभूमिपालः ॥ तद्वद् बुधाः शिवपदद्रुमबीजभूत—मव्याहतं वहत दर्शनरत्नमेतत् ॥ १२ ॥ इति गाथार्थः ॥ ४० ॥ अथ सम्यक्त्वयोग्यमाह—

॥ मूलम् ॥—भासासमइत्थिइविवेग—विणयकुसलो जियक्ख गंभीरो ॥ उवसमगुणेहिं जुत्तो

। निच्छयववहारनयनिउणो ॥ ४१ ॥ जिणगुरुसुयभत्ति—रज हियमियपियवयणजंपिरो धीरो ॥ संकाइदोसरहिज । अरिहो सम्मत्तरयणस्स ॥ ४२ ॥ व्याख्या—भाषा सावद्येतररूपा, मतिर्मेधा यथास्थितशास्त्रार्थविवेचनं, बुद्धिरौत्पत्तिक्यादिका, विवेकः सम्यक्कृत्याकृत्यपर्यालोचनं, विनयो गुर्वादिष्वभ्युत्थानादिः, एषु कुशलो निपुणः. जिताक्षो नियंत्रितेंद्रियः, गंभीरोऽनुपलक्षितरोषतोषविषादादिः, विशेषणसमासश्चानयोः, उपशमेनोपलक्षिता गुणाः समसंवेगादयो वक्ष्यमाणास्तैर्युक्तो, नयशब्दस्य प्रत्येकमभिसंबंधान्निश्चयनयव्यवहारनयनिपुणः ॥ ४१ ॥ तथा जिनगुरुश्रुतभक्तिरतो व्यक्तं, हितमितप्रियवचनजल्पकः, तत्र हितं पथ्यान्नवत्, मितमल्पं कार्यापेक्षमिति, अथ प्रियमाह्लादि, तच्च तद्वचनं च तज्जल्पनीत्येवंशीलः, प्राक् सामान्येन भाषापरिज्ञानमभिहितं, इह तु यथा तज्जल्पनं तथेत्यपौनरुक्त्यं, धीरो व्यसनेषु चाविक्लवः, शंकादयः शंकाकांक्षाविचिकित्सापरपाखंडप्रशंसातत्संस्तवास्ते च ते, दुष्यते सम्यक्त्वमेभिरिति दोषाश्च तै रहितः, तत्र शंका संदेहः, सा च सर्वविषया देशविषया च, आद्यास्ति वा नास्ति वा धर्म इत्यादि, द्वितीया त्वेकैकवस्तुधर्मगोचरा, यथास्ति जीवः केवलं सर्वगोऽसर्वगो वा सप्रदेशोऽप्रदेशो वेत्यादि. इयं च द्विधाप्यर्हत्प्रणीतप्रवचनप्रत्य-

याप्रत्ययरूपा सम्यक्त्वं दूषयति, केवलागमगम्या अपि हि पदार्था अस्मदादिप्रमाणपरीक्षानिरपेक्षा आप्तप्रणेतृकत्वान्न संदेग्धुं योग्याः, यत्रापि मोहवशात क्वचन संशयो भवति तत्राप्यप्रतिहतेयम गैला, यथा—

कत्थ य मइदुब्बलेण । तव्विहा यरियविरहओ वावि ॥ णेय गहणत्तणेण य । नाणावरणोदएणं च ॥ १ ॥ हेऊदाहरणासं—भवे य सइ सुठु जहन्न बुज्झिज्जा ॥ सव्वन्नुमयमवितहं । तहाविहं चिंतए मइमं ॥२॥ अणुवकयपराणुग्गह—परायणा जं जिणा जगप्पवरा ॥ जियरागदोसमोहा । नन्नहावाइणो तेणं ॥ ३ ॥ कांक्षा अन्यान्यदर्शनग्रहणं, सापि सर्वतो देशतश्च, सर्वतः सर्वपाखंडिधर्मकांक्षारूपा, एकादिदर्शनाकांक्षा तु देशाकांक्षा, यथा सुगतेन भिक्षूणामक्लेशको धर्म उपदिष्टः, तथाहि—

मृद्वी शय्या प्रातरुत्थाय पेया । भक्तं मध्ये पानकं चापराह्णे ॥ द्राक्षाखंडं शर्करा चापराह्णे । मोक्षश्चांते शाक्यपुत्रेण दृष्टः ॥ १ ॥ एतदपि घटमानकमेव, न दूरापेतमित्यादि. इयमपि परमार्थतो जिनमतानास्थारूपा सम्यक्त्वं दूषयति. विचिकित्सा चित्तप्लवः, स च सत्यपि युक्त्यागमोपप-

न्ने जिनधर्मेऽस्य महतस्तपःक्लेशस्यायत्यां फलसंपद्भाविन्यथवा क्लेशमात्रमेवेति, यत कृषीवलादीनां क्रिया सफला अफलाश्च दृश्यंत इति. यदाह—पुव्वपुरिसा जहोचिय—मग्गचरा घडइ तेसि फलजोगो ॥ अम्हेसु धीसंघयण—विरहओ न तह तेसि फलं ॥ १ ॥ इह च शंका सकला सकलपदार्थभाक्त्वेन द्रव्यगुणविषया, असौ पुन क्रियाविषयैवेति भेदः, यद्वा विचिकित्सा सदाचारनिंदा, यथाऽस्नाने प्रस्वेदजलक्लिन्नत्वाद् दुर्गंधो वपुष इति को दोषः स्याद्यदि प्राशुकवारिणांगप्रक्षालनममी कुर्वीरन्निति. पाखंडप्रशंसा च सर्वतः, सर्वदर्शनानि युक्तियुक्तानीति मध्यस्थप्राया दृष्टिः, इदमपि सम्यक्त्वदूषणमेव, यदुक्तं—सुनिश्चितं मत्सरिणो जनस्य । न नाथ मुद्रामतिशेरते ते ॥ माध्यस्थ्यमास्थाय परीक्षका ये । मणौ च काचे च समानुबंधाः ॥ १ ॥ देशतस्त्विदमेव बुद्धादिवचनं तत्वमिति. इदं तु व्यक्तमेव सम्यक्त्वदूषणं, तैः सह संस्तवः परिचयस्तत्संस्तवः, एकत्रवासे हि तत्प्रतिक्रियादर्शनात दृढसम्यक्त्वस्यापि दृष्टिभेदः संभाव्यते, किमुत मंदबुद्धेः! एवंविधगुणयुक्तोऽर्हः सम्यक्त्वरत्नस्य, अमीषां गुणानां मध्ये केचित्सम्यक्त्वलाभहेतव, केचिद् भूषणकल्पाः, केचित्प्रतिपातप्रतिबंधकाश्च विज्ञेयाः, एतावद्गुणमार्गणेन प्राप्तं चिंतामणितुल्यं सम्यक्त्वरत्नमपात्रे समारोपयत.

सिद्धांतविराधनामाहेति गाथार्थः ॥ ५७ ॥ अथ स्वर्गापवर्गादिपरमसुखनिबंधनसम्यक्त्वगुणशालिनां श्लाघामाह—

॥मूलम्॥—ते धन्ना ताण नमो । ते चिय चिरजीविणो बुहा ते उ ॥ जे निरइयारमेयं । धरंति सम्मत्तवररयणं ॥ ५८ ॥ व्याख्या—त एव धनमर्हंतीति धन्या आत्यंतिकैकांतिकधनवंतः, उक्तं हि—धनेन हीनोऽपि धनी मनुष्यो । यस्यास्ति सम्यक्त्वधनं विचित्रं ॥ धनं भवेदेकभवे सुखाय । भवे भवेऽनंतसुखी सुदृष्टिः ॥ १ ॥ तेभ्य एव नमः, सकलगुणाधारदर्शनयुक्तत्वात्, त एव चिय एवार्थे सर्वत्र योज्यः, चिरजीविनो भवंत्विति शेषः, धर्मानुगतजीवितत्वात्, बुधाश्च त एव विवेकसंपन्नत्वात्, तु· समुच्चये दर्शिन एव· उत्तरार्धं स्पष्टं, केवलमतिचारा· प्रागभिहिता इति गाथार्थ ॥ ॥ ५८ ॥ इह च दर्शनविषयेषु कालद्रव्यत्वादिषु क्वचित् संख्याविषयात् क्वचिन्नामविषयात् क्वचिन्नास्तित्वविषयात् परेषां विप्रतिपत्तिस्तन्निराकर्तुमाह—

त्रैकाल्यं द्रव्यषट्कं नवपदसहितं जीवषट्कायलेश्या· । पंचान्येचास्तिकाया व्रतसमितिगतिज्ञानचारित्रभेदा· ॥ इत्येतन्मोक्षमूलं त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः । प्रत्येति श्रद्दधाति स्पृशति च

मतिमान् यः स वै शुद्धदृष्टिः ॥ १ ॥ व्याख्या—त्रिकालमेव त्रैकाल्यं भूतभवद्भविष्यत्स्वरूपं, द्रव्याणि पुद्गलाश्रयास्तेषां षट्कं धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायकालपुद्गलास्तिकायजीवास्तिकायरूपं, पद्यंते गम्यंते सम्यग्ज्ञानिभिरिति पदानि तत्वानि नव च जीवाजीवादीनि तानि पदानि च. तै. सहितं, षट्शब्द. सिंहावलोकितन्यायेन जीवशब्देनापि संबध्यते, तत. प्रत्येकं षड्जीवाः, एकद्वित्रिचतु.पंचेंद्रियानिंद्रिया., काया. पृथ्वीकायादय, लेश्याः कृष्णाद्याः, पंचान्येवास्तिकाया धर्मास्तिकायादयः, कालस्तु निरुद्धसमयरूपत्वान्नास्तिकाय., पंचशब्दस्योत्तरपदेष्वपि संबंधः, व्रतानि प्राणिवधविरमणादीनि, समितय ईर्याद्या, गतयो नारक्याद्याः, ज्ञानानि मत्यादीनि, चारित्रभेदाः सामायिकादयः, इतिरुल्लेखे, एतत् त्रैकाल्यादिज्ञानश्रद्धानानुष्ठानविषयतया मोक्षमूलं. किं स्वमतिकल्पनया? नेत्याह—त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैस्ततश्च प्रत्येति निश्चयरूपतया जानाति, ज्ञातमपि कश्चिन्न तथेति प्रतिपद्यत इत्याह, श्रद्दधाति रोचयति, रोचयन्नपि कश्चिन्नानुतिष्ठतीत्याह, स्पृशति चासेवते, मतिमान् य., इह च प्रत्ययादीनां त्रैकाल्यादिषु यथासंभवं योजना कार्या, स वै स्फुटं शुद्धदृष्टिः सर्वोपधाशुद्धदर्शन इति वृत्तार्थः ॥ ४२ ॥ कैः पुनर्लिंगैः सम्यक्त्वमस्तीति श्रद्धीयत इ-

त्याह—

॥ मूलम् ॥—उवसमसंवेगोवि य । निव्वेऊवि य तहेव अणुकंपा ॥ आत्थिक चेव तहा । सम्मत्ते लक्खणा पंच ॥ ५५ ॥ व्याख्या—उपशमोऽनंतानुबंधिनामनुदयः. विभक्तिलोपः प्राकृतत्वात्. अन्ये तु क्रोधकंडूविषयतृष्णोपशांतिरुपशम इत्याहुः. नन्वेवं कृष्णश्रेणिकादीनां सापराधे निरपराधे च परे क्रोधवतां विषयतृष्णातुराणां च कथमुपशम ? तदभावे च सम्यक्त्वं न गम्येत, नैवं. लिंगिनि सति लिंगेनावश्यं भाव्यमिति नायं नियमः. दृश्यते हि धूमरहितोऽप्ययस्कारगृहेषु वह्निः. अयं तु नियमः सुपरीक्षिते लिंगे लिंगी भवत्येव यदाह—लिंगे लिंगी भवत्येव । लिंगिन्येवेतरत्पुनः ॥ नियमस्य विपर्यासे । संबंधो लिंगलिंगिनोः ॥ १ ॥ संज्वलनोदयाद्वा कृष्णादीनां क्रोधकंडू विषयतृष्णे. संज्वलना अपि केचित्तीव्रतया अनंतानुबंधिसदृशविपाकवंत इति सर्वमनवद्यं, संवेगो मोक्षाभिलाषोऽपि. चेति समुच्चये. एवं सर्वाण्ययानि २. निर्वेदो भववैराग्यं, अन्ये तु संवेगो भवविरागो निर्वेदो मोक्षाभिलाष इति विपर्ययमाहुः ३. अनुकंपा दुःखितेष्वपक्षपातेन दुःखप्रहाणेच्छा ४, अस्तीति मतिरस्येत्यास्तिकस्तस्य भावः कर्म वास्तिक्यं. तत्त्वांतरश्रवणेऽपि जिनोक्ततत्त्ववि-

षय निराकांक्षाप्रतिपत्तिः ९. एतानि सम्यक्त्वं लक्ष्यितव्यानीति शेषः, लक्ष्यते गम्यते परीक्ष
म्यक्त्वमेभिरिति लक्षणानि पंचेति गाथार्थः ॥ ४४ ॥ अथानादिविषयकषायसंवलितात्मसु प्रा
कथमुपशमादि संभवतीत्याह—

॥ मूलम् ॥—इह य परिणामो खलु । जीवस्स सुहो होइ विन्नेओ ॥ किं मलकलंकमुक्क
कणगं भुवि झामलं होइ ॥ ४५ ॥ व्याख्या—अत्र सुसम्यक्त्वे सति परिणामो भाव. खलु निश्च
शुभ एव विशुद्ध एव भवतीति ज्ञातव्यः, तत्प्रतिबंधकक्लिष्टकर्मापगमात्, शुभभावरूपाश्चामी उप
मादयः, उक्तस्यैव समर्थनायाह—किं मलकलंकमुक्तं किट्टकालिमादिरहितं कनकं भुवि ध्याम
भवति? नैवेत्यर्थ इति गाथार्थः ॥ ४५ ॥ संप्रत्युपशमादीनामेव सहेतुकफलदर्शनद्वारेण स्वरूप
पवर्णयति—

॥ मूलम् ॥—पयईए कम्माणं । वियाणिउं वा विवागमसुहंति ॥ अवरद्धेवि न कुप्पइ ।
वसमओ सव्वकालंपि ॥ ४६ ॥ व्याख्या—प्रकृत्या स्वभावेन कर्मणां कषायलक्षणानां विज्ञाय वा
पाकं परिणाममशुभं कटुफलमित्यस्माद्धेतोरपराधेऽपि भावोक्तविप्रियेऽपि सति न कुप्यति श्रुतत्व

पराधकारिभ्य एन. उपशमत. सर्वकालमप्यपराधनिर्यातनासामर्थ्योत्पत्तावपीत्यर्थ इति गाथार्थः ॥ ४६ ॥ तथा—

॥ मूलम् ॥—नरविबुहेसरसोक्खं । डुक्खं चिय जावन्न मन्नंतो ॥ संवेगन्न न मोक्खं । मोत्तूणं किंपि पत्थेइ ॥ ४७ ॥ नरविबुधेश्वराणां नरेन्द्रसुरेन्द्राणां सुखमेव सौख्यं विषयसेवाजनिता न परितुष्टिः. दुःखानुषंगाद्दुःखमेव. कह तं जाणइ सुक्खं । सुचिरेणावि जस्स दुक्खमल्लियइ ॥ जं च मरणावसाणे । भवसंसाराणुबंधि च ॥ १ ॥ भवभ्रमणानुबंधि इति वचनाद्भावतः परमार्थत, तु मन्यमान. संवेगतो न मोक्षं मुक्त्वा किमपि प्रार्थयतेऽभिलपति, मोक्षसुखस्यैव भावतः सुखत्वेन मतत्वादिति गाथार्थ. ॥ ४७ ॥ तथा—

॥ मूलम् ॥—णारयतिरियणरामर—नवेसु निव्वेयन्न वसइ डुक्खं ॥ अकयपरलोयमग्गो । ममत्तविसवेगरहिन्न व ॥ ४८ ॥ व्याख्या—नारकादिनवेषु निर्वेदतो दुःखं यथा भवत्येवं वसत्यास्ते. अयमभिप्राय.—नानाविधशारीरमानसदुःखगहने संसारकारागारे कर्मदंडपाशिकैस्तथातथा कदर्थ्यमान. प्रतिकर्तुमसमर्थो निर्वेदाद्दुःखं वसति. किंविशिष्ट. सन्? चारित्रमोहनीयपारतंत्र्यान्न कृ

तः परलोको जन्मांतरं, स पुनरिह प्रस्तावात् शुभस्तस्य मार्ग इव मार्गः कुशलानुष्ठानं येन सोऽपि, यद्वा परः प्रकृष्टसर्वातिशायी स चासौ समुदायप्रयोगाल्लोकश्च सिद्धिक्षेत्रलक्षणः परलोकस्तस्य मार्गे प्राग्वत्, यद्यपि कर्मदोषाद्भवाब्धेर्निस्तरणोपायं नानुतिष्ठति, तथापि तत्र निर्विघ्न एवास्ते इत्यर्थः. अत एव ममत्वमेव दारुणपरिणामत्वेन विषं, तस्य वेगो लहरिस्तेन रहितोऽनित्यतादिभावनाभावितत्वेन धनस्वजनशरीरादिवस्तुषु त्यक्तात्मीयत्वाभिमान इत्यर्थोऽपि भिन्नक्रमे योजित एवेति गाथार्थः ॥ ४ए ॥ तथा—

॥ मूलम् ॥—दहूण पाणिनिवहं । भीमे भवसायरम्मि डुक्खत्तं ॥ अविसेसञणुकंपं । डुहावि सामबज्ज कुणइ ॥ ४ए ॥ व्याख्या—पूर्वार्धं सुगमं, अविशेषतोऽपक्षपातेन, पक्षपातेन तु स्वापत्यादिषु करुणा व्याघ्रादीनामप्यस्ति. अनुकंपा द्विधापि द्रव्यतो बाह्यापत्प्रतीकारेण, भावतश्चार्द्रहृदयतया, सामर्थ्यतः स्वशक्तिमपेक्ष्य करोत्यनुकंपामिति गाथार्थः ॥ ४ए ॥ तथा —

॥ मूलम् ॥—मन्नइ तमेव सच्चं । निस्संकं जं जिणेहिं पन्नत्तं ॥ सुहपरिणामो सम्मं । कंखाइविसुत्तियारहिञ ॥ ५० ॥ व्याख्या—मन्यतेऽभ्युपगछति तदेव सम्यक् सत्यमविसंवादि निश्शंकं

निस्संदेहं तत् किं? यज्जिनैः प्रज्ञप्तं, शुभपरिणाम आस्तिक्यलक्षणो यस्य स तथास्तिक इत्यर्थः. सम्यक्शब्दो योजित एव, कांक्षादय एव विश्रोतसिकाश्चित्तविप्लुतयस्ताभी रहित इति. अन्ये तू-पशमादीन्यन्यथा व्याचक्षते, सुपरीक्षितप्रवक्तृप्रवाच्यप्रवचनतत्वाभिनिवेशान्मिथ्याभिनिवेशोपशां-तिरुपशमः. यो ह्यतत्वं विहाय तत्वं प्रतिपन्नः स लक्ष्यते सम्यग्दर्शनीति १. संवेगो ऽयं जिनप्रव-चनानुसारिणो नरकादिषु नानादुःखमवलोकयतस्तद्भीरुतया तत्प्रशमोपायभूतं धर्ममनुतिष्ठतो लक्ष्य-ते विद्यतेऽस्य सम्यक्त्वमिति २. विषयेष्वनभिषंगो यथा इहपरलोकयोर्दुरंतः कामभोगाभिष्वंगः, त-स्माद्भीत एवमिति निर्वेदाल्लक्ष्यते सम्यक्त्वमिति ३. अनुकंपा कृपा, यथा सर्वे एव सत्वाः सुखार्थि-नो दुःखप्रहाणार्थिनश्च, तन्नैषामल्पापि पीडा मया कार्येत्यनयापि लक्ष्यते सम्यक्त्वं ४, संति खलु जिनप्रवचनोपदिष्टा अतींद्रिया जीवपरलोकादयो भावा इति परिणाम आस्तिक्यं, अनेनापि ल-क्ष्यते सम्यक्त्वमिति गाथार्थः ॥ ५० ॥ प्रकृतमेव निगमयन् सम्यक्त्वमाह—

॥ मूलम् ॥—एवंविहपरिणामो । सम्मद्दिठी जिणेहिं पन्नत्तो ॥ एसो उ भवसमुद्दं । लंघइ थोवेण कालेण ॥ ५१ ॥ व्याख्या—एवंविध उपशमादिरूपः परिणामो यस्य स तथा सम्यग्दृष्टि-

र्जिनैः प्रज्ञप्तः, एष एवोत्कृष्टदर्शनाराधको भवसमुद्रं लंघयति स्तोकेन कालेनोत्कृष्टतस्तेनैव भवेन, जघन्यतस्तृतीयेन, तथा चागमः—उक्कोसदंसणेणं भंते जीवे कइहिं भवग्गहणेहिं सिज्झिज्जा? गोयमा! उक्कोसेणं तेणेव, तइ मुक्के तइयं नाइक्कमइत्ति गाथार्थः ॥ ५१ ॥ एवमैकांतिकसौख्यहेतुः सम्यक्त्वमुक्तं तत्पुनर्विरतिसहायमेव ज्ञेयं, तद्विना कृत्यस्य निकाचितकर्मक्षयकृतस्तपसोऽप्यसारत्वादिदमेवाह—

॥ मूलम् ॥—सम्मद्दिठिस्सवि अविरयस्स । न तवो बहुप्फलो होइ ॥ हवइ हु हत्थिण्हाणं । बुंदच्छिययंव तं तस्स ॥ ५३ ॥ व्याख्या—मिथ्यादृष्टेस्तपसस्तावदसारत्वं सुस्थितमेव, तथाच—सठिं वाससहस्सा । तिसत्तखुत्तोदएण धोएण ॥ अणुचिन्नं तामलिणा । अण्णाणतवोत्ति अप्पफलो ॥ ॥ १ ॥ सम्यग्दृष्टेरपि सावद्ययोगेभ्योऽविरतस्य न तपोऽनशनादि बहुफलं शिवसुखफलं भवति, स्वर्गादिसुखफलं तु भवत्येव, किंतु तस्याल्पत्वात्, किमित्येवमित्याह—

हुर्यस्मादर्थे, यस्मात्तत्तपस्तस्य हस्तिस्नानमिव हस्तिस्नानं भवति, यथा हि हस्ती स्नात्वा पुनर्धूलिपुंजमंगे निक्षिपति, एवमयमपि तपसा कर्म क्षपयित्वा पुनरविरत्या बध्नाति. बुंदाच्छितकं, वात्रा-

ष्युपमानार्थो वाच्यः, चुंदं तक्षणामुपकरणविशेपस्तस्यां ग्रंथितमाकर्पणं, एतद्धि वध्राभिरावेष्ट्य कराभ्यामाकृष्यते, तच्च यदा वामकरेणाकृष्यते तदा दक्षिणतो वध्रावेष्टकैः पूर्यते, यदा तु दक्षिणेन तदा वामत, एवमयमप्येकतस्तपसा कर्म क्षपयति, अन्यतस्त्वविरतया बध्नातीति गाथार्थः ॥ ५३ ॥ उक्तमेवार्थमुदाहरणद्वारेण समर्थयितुमाह—

॥ मूलम् ॥—चरणकरणेहिं रहिउ । न सिज्झई सुद्धसम्मदिठीवि ॥ जेणागमम्मि सिठो । रहंधपंगूणदिट्ठंतो ॥ ५४ ॥ व्याख्या—चरणकरणाभ्यां रहितः सुष्ठपि सम्यग्दृष्टिः क्षायकदर्शनोऽपीत्यर्थः, न सिध्यति, येन कारणेनागमे सामायिकनिर्युक्तौ शिष्टः कथितो दृष्टांतः, केषां? रथांधपंगूनां. तत्र रथदृष्टांतो यथा—संजोगसिद्धिए फलं वयंति । न हु एकचक्केण रहो पयाइ ॥ इति. अंधपंगुदृष्टांतः पुनरन्वयतो यथा—अंधो य पंगू य वणे समिच्चा । तेसिं पइत्ता नयरं पविट्ठा ॥ व्यतिरेकतस्तु—पासंतो पंगुलो दिट्ठो । धावमाणो य अंधउ ॥ इति. संप्रदायगम्यौ पुनरिमौ. तथाहि—

कुतश्चिन्नगराल्लोकः । परचक्रभयाकुलः ॥ पलाय्य सपरिवारः । किंचित्कांतारमाश्रयत् ॥ १ ॥

दैवत्तत्राप्यवस्कंद-भये कंदलितोदये ॥ प्रणश्य त्यक्तसर्वस्वः । सदिशो विदिशो ययौ ॥ २ ॥ अंधः पंगुश्च तत्र द्वा—वनाथौ केवलं स्थितौ ॥ जजागार युगांताग्नि—मित्रमत्रांतरे दवः ॥ ३ ॥ तद्भयादाकुलं धावन् । दृग्घीनः पंगुनोच्यत ॥ सुष्टु मागाः पुरोभागा—देति दावानलो ज्वलन् ॥४॥ का गतिस्तर्हि मे स्यादि—त्युक्ते तेनावदत्पुनः ॥ समा चिंता ममाप्येषा । त्वमंधः पंगुलस्त्वहं ॥ ॥ ५ ॥ किंत्वारोपय मां स्कंधे । तव पादौ ममाक्षिणी ॥ एह्येहि येन संयुज्य । तरावो व्यसनार्णवं ॥ ६ ॥ अथैवं विहिते तेन । कृतसाहायकौ मिथः ॥ तौ स्थानं वांछितं प्राप्तौ । न सिद्धिः किं हि संहते ॥ ७ ॥ समेते सिद्धये स्याता—मेवं ज्ञानक्रिये अपि ॥ विधत्तास्मिन् द्वये यत्न—मसपत्नं ततो बुधाः ॥ ८ ॥

व्यतिरेकस्तु—पुरे कापि वियद्व्यापि—ज्वालमासीत्प्रदीपनं ॥ आदाय तद्भिया प्राणान् । प्राणश्यत्कोऽपि कुत्रचित ॥ १ ॥ जनस्य नश्यतो वेगात् । कौचिदंधलपंगुलौ ॥ वराकौ विस्मृतौ दैव—महो दुर्बलघातकं ॥ २ ॥ धावन्नितस्ततोऽवंध्य—मंधः प्लोषतयाकुल· ॥ गर्तायां पतितो दावा—त्तत्क्षणं भस्मसादभूत् ॥ ३ ॥ पश्यन् पलायितुं मार्ग—मग्निं चोपांतमागतं ॥ प्रसह्य दह्यमानांगः

। पंगुलः पंचतां ययौ ॥ ४ ॥ तद्वद्दर्शनचारित्रे । निराकांक्षे परस्परं ॥ नैव साधीयसी स्यातां । वांछितार्थप्रसिद्धये ॥ ५ ॥ इति गाथार्थः ॥ ५३ ॥ अथ चरणकरणयोरेव स्वरूपमाह—

॥ मूलम् ॥—वयसमणधम्मसंजम—वेयावच्चं च बंभगुत्तीओ ॥ नाणाइतियं तवकोह—निग्गहाइ चरणमेयं ॥ ५४ ॥ पिंमविसोही समिई । भावण पम्मिा य इंदियनिरोहो ॥ पडिलेहण-गुत्तीओ । अभिग्गहा चेव करणं तु ॥ ५५ ॥ व्याख्या—नव व्रतानि प्राणातिपातविरमणादीनि पंच, श्रमणधर्मः क्षांत्यादिर्दशधा, संयमः पृथिव्यादिसंरक्षणादिः सप्तदशधा, वैयावृत्त्यमाचार्यादिविषयं दशधा, स्त्रीपंढपशुमद्वसतिः १, युवतिभुक्तासनं २, मिथुनकलितकुड्यांतरः ३, सरागवनिताकथा ४, प्राक्तनसुरतचिंतनं ५, कामिनीकमनीयांगवीक्षणं ६, स्वांगसंस्कारः ७, प्रणीतभोजनं ८, अतिभोजनं ९ चेत्युप्रनस्वरूपा ब्रह्मगुप्तयो नव, ज्ञानादित्रिकं प्रसिद्धं, तपोऽनशनादि द्वादशधा, क्रोधनिग्रहादि क्रोधमानमायालोभजयः, एतत् किं? चरणं चारित्रमुच्यते. अत्राह—दशविधश्रमणधर्मे क्षांतिमार्दवार्जवमुक्तीनामुक्तत्वादिह क्रोधादिनिग्रह इति न वाच्यं, पुनरुक्तत्वात् उच्यते—तत्र तेषामासेवनरूपत्वेन विधिरूपतया संगीतत्वादिहत्विमे निग्रहरूपतया प्रतिषेधरूपाः परिज्ञातव्याः, ततो

न पौनरुक्त्यं विधिप्रतिषेधयोर्भिन्नलक्षणत्वात्, अथवा तत्र क्षांत्यादिचतुष्टयग्रहणेन क्रोधादिचतुष्टयनिग्रह उक्तः, इह तु साधोरपि तथाभूतकारणवशाद्बलात्क्रोधादिविजृंभणे तत्फलविपाकसंवेदनेन विफलतापादनं कार्यमिति क्रोधादिनिग्रह इत्युक्तमतो न पौनरुक्त्यं.

ननु च संयमतपसी अपि दशविधश्रमणधर्मग्रहणादुक्ते एव, तत्कथं पृथगुपन्यासेन? उच्यते—प्राधान्यख्यापनार्थं, तथाहि—संयमो गुप्तिकृत्, तपस्तु प्रागुपात्तकर्मक्षयकृदिति. एवं तर्हि वैयावृत्त्यग्रहणं न कार्यं, द्वादशतपोग्रहणे नैवोक्तत्वात्, उच्यते—एकादशविधं तप आत्मन एवोपकारि, इदं तु स्वपरोपकारित्वेन प्रधानमिति भेदोपन्यासभागित्यदोषः. ननु चैवं विनयः कस्मान्न पृथगुक्तः? असावप्युभयोरप्युपकारक इति, उच्यते—उक्त एवासौ ' वेयावच्चं चेति ' चशब्दग्रहणात्. ननु च चारित्रग्रहणं न कार्यं, व्रतग्रहणादेवास्योक्तत्वात्, न, चारित्रं समुदायरूपं, व्रतानि तु चारित्रैकदेशः, ततश्च व्रतग्रहणेनाशेषचारित्रग्रहणमिति. तथा च सामान्यविशेषयोः कथंचिद्भेद एवेत्युक्तं चरणं ॥ ५४ ॥ तथा पिंडस्य चतुर्विधाहारस्योपलक्षणत्वाच्छय्यावस्त्रपात्राणां च विशुद्धिरुद्गमोत्पादनैषणादोषमलाभावः, समितयः पंचेर्यादयः, भावना अनित्यादयो द्वादश, इंद्रियाणि स्पर्शनादीनि पंच,

तेषां निरोधः. इष्टानिष्टविषयेषु रागद्वेषपरिहारेण जयः, प्रतिलेखना वस्त्रपात्रादीनां पंचविंशतिधा, गुप्तयस्तिस्रो मनोगुप्त्यादयः, अभिग्रहा द्रव्यक्षेत्रकालभावविषयाश्चतुर्विधाः, च समुच्चये, एवत्ति एवं, तुः पुनरर्थे, तेनैतदुक्तं भवति, करणं पुनरेवं भवति. ननु चरणं करणं चेति किं कृतो नामभेद ? द्वयोरप्यासेवनारूपत्वात्, उच्यते—

चरणं मूलगुणरूपं. करणं तूत्तरगुणरूपमात्रमिति. अत एव चर्यत इति चरणं सततासेवनारूपं, तथाहि—व्रतादीनां यावत्कथं सततमासेव्यमानत्वात्. करणं तु कादाचित्कं, तथाह्यनक्तार्थी न पिंडमादत्ते. एवं समितयोऽपि कादाचित्का. सर्वदा गमनादेरयोगात्. भावना अपि विशिष्टकालविषया ध्यानोपरमादिषु भाव्यमानत्वात्. प्रतिमा अपि विशिष्टपुरुषकालविषया एव. तथेन्द्रियनिरोधोऽपीष्टानिष्टविषयप्राप्तौ रागादिवर्जनं, कचित् प्रत्युपेक्षणापि विशिष्टकालविषयैव, गुप्तयोऽप्यनियता एव, कचित्संकुचितकायाद्यवस्थासु संभवात्. अनिग्रहा अपि कचिदेव काले पुरुषे वा स्युरिति. तदियता क्रियासहचरितमेव सम्यग्दर्शनं मोक्षायेति स्थापितमिति गाथाद्वयार्थः ॥ ५५ ॥ अथ सम्यग्दर्शनक्रियया. सहकारित्वे सति किं केन स्वभावेनोपकुरुते? किमविशेषेण शिबिकोद्वाहकपुरुषवत् उ-

त भिन्नस्वभावतया गमनक्रियायां नयनचरणादिवत्, अत्रोच्यते, भिन्नस्वभावतया, अत आह—

॥ मूलम् ॥—सम्मग्गस्स पयासगं इह भवे णाणं तवो सोहणं। कम्माणं चिरसंचियाए नियमं गुत्तीकरो संजमो ॥ बोधव्वो नवकम्मुणो नियमणे भावेह एयं सया। एसि तिण्हवि संगमेण भणिओ मोक्खो जिणिंदागमे ॥ ५६ ॥ व्याख्या—तत्र कचवरसमन्वितमहागृहशोधने प्रदीपपुरुषादिव्यापारवदिह कर्मकचवरभृतशोधनालंबनो ज्ञानादीनां स्वभावभेदेन व्यापारोऽवसेय इति समुदायार्थः, अवयवार्थस्तु सन्मार्गस्य मोक्षाध्वनः प्रकाशकमिह सहकारिव्यापारविचारे भवेत् ज्ञानं प्रदीपवत्, क्रिया तु तपःसंयमरूपतया द्विधा, तत्र यत् शोधयतीति शोधनं कर्मणां चिरसंचितानां, कर्मकरपुरुष इव कचवरस्य, नियतं निश्चितं गुप्तिकरो निरोधकः संयमः बोधव्यः. कस्य? नवकर्मण आगंतुकपाप्मनः, पवनप्रेरितकचवरादिनिरोधकवातायनादिस्थगनवत्, निजमनसि भावय, नैवं सदा न पुनरेकमेव ज्ञानं क्रिया वा सर्वत्र प्रकाशादिष्वलमेवंरूपाभ्युपगमस्य मिथ्यात्वात्, यदाह—नाणाहीणं सव्वं। नानाणनओ भणइ किंच किरियाए॥ चरणनओ किरियाए। तदुभयगाहो ओ सम्मत्तं ॥ १ ॥ इति. एतदेव पर्यवसितमाह—

एषां त्रयाणामेव ज्ञानादीनामपिशब्दोऽवधारणार्थेसंभावने वा, किं संज्ञापयति? निश्चयतः क्षायिकानां न तु क्षायोपशमिकानां संगमेन भणितो मोक्षः सर्वथाष्टकर्ममलविगमलक्षणो जिनेंद्रागमे इति. ननु पूर्वं सम्यग्दर्शनत्रिययोः सहकारित्वं प्रस्तावितं. इह तु सम्यग्दर्शनस्य नामापि नोपात्तं, तत्कथं न पूर्वापरविरोधः? न. तस्य रुचिरूपत्वेन ज्ञानविशेषत्वात्तद्ग्रहणेनैव ग्रहणमवसेयं, एवं च सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इत्येतदपि सुप्रतिष्ठितमिति ज्ञानत्रयशब्दोपादानेन अंतमंगलमनेनाविष्कृतमिति वृत्तार्थः ॥ ९६ ॥ सांप्रतं सूत्रकारः स्वाभिधानं भंग्या प्रतिपादयन् यदादौ यच्चुद्धमतीनामनुग्रहायेति प्रतिज्ञातं तन्निर्वहणेनोपसंहरति—

॥ मूलम् ॥—चंदाइपहवरसूरि—पयनिबद्धपढमवन्नेहिं ॥ जेसिं नामं तेहिं । परोवयारंमि निरएहिं ॥ ९७ ॥ इय पायं पुव्वायरिय—रइयगाहाण संगहो एसो ॥ विहिओ अणुग्गहट्ठं । कुमग्गलग्गाण जीवाणं ॥ ९८ ॥ व्याख्या—चंद्रादिपदनिबद्धप्रथमवर्णैर्येषां नाम तच्चंद्रप्रभसूरिरिति, तैः परोपकारनिरतैरिति किमित्याह—इति समाप्तौ, प्रायो बाहुल्येन पूर्वाचार्यरचितगाथानां संग्रह इतस्ततो भणितानामिह संचय एष साक्षाद्भक्तो भणितः. अथ इत्यनेन च सूत्रतः स्वोपज्ञा अपि

काश्चन गाथाः संतीत्यावेदयति, अनुग्रहार्थं कुमार्गलग्नानां जीवानामेतद्गणनं चामीषां विशेषानुकंपनीयत्वख्यापनार्थं. यतः—सुहसीलत्तेण गहिए । जवपद्धिं तेण जगम्मियमणाहो ॥ जो कुणइज्जावियत्तं । सोवन्नं कुणइ तिब्रस्स ॥ १ ॥ कुमार्गलग्नत्वं च तेषामज्ञानतया न पुनरभिनिविष्टतयेति गाथाद्वयार्थः ॥ ५८ ॥ तथा चाह—

॥ मूलम् ॥—जे मज्झ्बा धम्म—ह्विणो य जेसिं च आगमे दिठी ॥ तेसिं जवयारकरो । एसो न उ संकिलिठाणं ॥ ५७ ॥ व्याख्या—ये मध्यस्था अपक्षपातिनस्ते पुनरुदासीना अपि स्युर्नेत्याह, धर्मार्थिनश्च धर्मश्रद्धालवस्तेऽपि स्वमतिप्रवृत्तयो धूर्तविप्रतारिता वा स्युः, न, येषां चागमे दृष्टिर्दर्शनं श्रद्धानं बहुमतिरिति यावत. तेषामुपकारकरो हितकृदेष ग्रंथः, न तु संक्लिष्टानां रागद्वेषोपहतमनोवृत्तीनां तेषामुपकर्तुमशक्यत्वात्, तथाच—रागासक्ते चेतसि । धर्मकथा स्थानमेव नो लभते ॥ नीलीरक्ते वाससि । कुंकुमरागो दुराधेयः ॥ १ ॥ इति गाथार्थः ॥ ५७ ॥ अथैतस्या दर्शनशुद्धेर्विद्वच्चेतसि गौरवमारोपयन्नामान्याह—

॥ मूलम् ॥—जवएसरयणकोसं । संदेहविसोसहिं च विउयजणा ॥ अहवावि पंचरयणं ।

दंसणसुद्धि इमं भणह ॥ ६० ॥ व्याख्या—उपदेशा एव समीहितसाधकत्वेन रत्नानि तेषां कोशो निधिस्तं. संदेह एव व्यामोहकत्वेन विषं तस्यौषधिस्तां वा अथवापीति समुच्चये, रत्नानीव रत्नानि आगणप्रायत्वात्. ततश्च पंचानां देवगुरुधर्ममार्गसाधुतत्वलक्षणानां रत्नानां समाहारः पंचरत्नं दर्शनस्य सम्यक्त्वस्य शुद्धिहेतुत्वाच्छुद्धिस्तामिमां हे विद्वज्जना भणतेति सर्वत्र योग इति गाथार्थः ॥ ६० ॥ अथैतत्स्वरूपनिरूपणपुरस्सरं भव्यानामुपदेशरूपतया पठनाद्याशिषं प्राह—

॥ मूलम् ॥—मिछमहण्णवतारण-तरियं आगमसमुद्दविद्दुममं ॥ कुग्गहगगहमंतं । संदेहविसोसहि परमं ॥६१॥ एयं दंसणसोहिं । सव्वे भव्वा पढंतु निसुणंतु ॥ जाणंतु कुणंतु लहंतु । सिवसुहं सासयं झत्ति ॥ ६२ ॥ व्याख्या—मिथ्या अज्ञानात् कुशास्त्रश्रवणाद्वा विपर्ययः, स एव दुर्लंघत्वेन महार्णवस्तस्य तारणे तरी नावं. अनेनाभिग्रहिकानाभिग्रहिकानाभोगजमिथ्यात्वस्य निरासः, आगमसमुद्रे विद्रुममां. कुग्राह कदभिनिवेश स एवासच्चेष्टाप्रवर्तकत्वेन ग्रहो भूताद्यावेशस्तदुच्चाटने मंत्रं. अनेनाभिनिवेशिकस्य संदेहविषौषधि प्रागवत्. अनेन तु सांशयिकस्य परमामेकांतिकात्यंतिकीं. प्राग् नामप्रस्तावेनैतदुक्तं. इह तु स्वरूपनिरूपणद्वारेणेति न पौनरुक्त्यं. विशेषणं चामीभि-

पंचविधमिथ्यात्वनिरासदर्शिभिः, यदुक्तमादौ ‘ तं किंपि सिक्खियव्वं जं कज्जकरं चत्ति ’ तत्संवर्गितं, आगमसमुद्रबिंदुसमत्वेन च यदुक्तं ‘ थोवं चत्ति ’ तदिति. एतां दर्शनशुद्धिं सर्वे नव्याः पठंतु स्तवतः, निशृएवंत्वर्थतः, ततश्च जानंतु द्वेधापि, ततोऽपि च ज्ञानस्य फलं विरतिरिति कृत्वा कुर्वंतु एतदुक्तमनुतिष्टंतु, तदनुष्टानस्य तु शिवसुखसाधनंप्रत्यविकलकारणत्वाल्लभंतां शिवसुखं शाश्वतं झटिति, तदर्थत्वात्सर्वानुष्टानानामिति गाथाद्वयार्थः ॥ ६२ ॥ इति श्रीदेवचंद्रसूरिविरचिते दर्शनशुद्धिप्रकरणविवरणे पंचमं जीवादितत्वं समाप्तं ॥ श्रीरस्तु ॥

किमप्यूहाद्ग्रंथांतरविवरणेभ्यश्च किमपि । ज्ञसाचिव्यात् किंचिन्निजगुरुमुखाच्चाप्य किमपि॥ इयं दृब्धा वृत्तिस्तदपि यदसत् किंचिदुदितं । विशोध्यं तत्प्राज्ञैरविशदमतिर्मुह्यति न कः ॥ १ ॥ आस्ते तुंगो घनाभोगः । सुप्रतिष्टो भुवस्तले ॥ आस्थानं द्विजसार्थानां । श्रीकोटिकगणद्रुमः ॥२॥ तत्रायता घनछाया । सुमनःस्तोमसंस्तुता ॥ वैरशाखास्ति विख्याता । सदैव फलशालिनी ॥ ३ ॥ गोभिः सुधावयस्याभि—स्तर्पिताशेषतभूतलं ॥ तस्यां सुवृत्तसंशोभि चांद्रं। विजयते कुलं ॥४॥ अर्हद्भाससनकाननैकवसतिर्व्याख्यानगुंजारवैः । श्रोतृस्वांतनिकुंजकल्मषमृगानुत्त्रासयन् सर्वतः॥ प्रोन्मादिप्रति

॥ निबद्धा वृत्तिरूपेण । सत्वानां हितकाम्यया ॥ ११ ॥ सूरेः श्रीशांतिभद्राख्य—स्वशिष्यस्य महामतेः ॥ साहाय्यादयमारंभो । निष्ठाकोटिमटीकत ॥ १२ ॥ मुनिप्रज्ञाभिधानेन । विदुषैषा स्फुटाक्षरा ॥ अलेखि प्रथमादर्शे । विश्वविज्ञानशालिना ॥ १३ ॥ ग्रंथाग्रं श्लोकमानेन । वृत्तावस्यामुदीरितं ॥ बुधैस्त्रीणि सहस्राणि । संयुतान्यष्टभिः शतैः ॥ १४ ॥ यावद्व्योमवने निरायतकरैर्नक्षत्रपुष्पावलीं । चिन्वानो वरिवर्तते प्रतिदिनं भास्वान्महामालिकः ॥ ग्रंथस्तावदयं सुवर्णनिधिवन्नानार्थसिद्धिप्रद—स्तत्वप्रीतितरस्विनां कृतधियां चेतश्चिरं चुंबतु ॥ १५ ॥ श्रीरस्तु ॥

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्री जैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

॥ इति श्रीदर्शनशुद्धिटीका समाप्ता ॥